॥ श्रीगुरुः शरणम् ॥

प्रकाशटीकोपेतं

# संक्षिप्तमूलरामायणम् ।

श्रीधर्माधिकारिपाठशालाध्यक्षेण—

पं० नेने-गोपालशास्त्रिणा

स्वकृतटीकया टिप्पण्या च समलङ्कृत्य प्रकाशितम् ।

विद्याविलास प्रेस,

बनारस ।

१९२४

# भूमिका ।

यह सिद्धान्त है कि जिस मनुष्यको जैसा आदर्श मिलता है उसका चरित्र उसी आदर्शके अनुसार हुआ करता है। आर्यजातिके लिये श्रीरामचन्द्रजी और सीता देवी सर्वोत्तम व पवित्र आदर्श हैं, जिनके पितृभक्ति, भ्रातृ-प्रेम, सत्यवचन, शूरता, पातिव्रत्य आदि गुणोंका यथार्थ वर्णन रामायणमें किया गया है। उस रामायणका पाठ करनेसे पाठकगण अपनेको सुचरित्र करसकते हैं। अत एव भारतवर्षकी परीक्षाओंमें भी प्रायः रामायण नियत रहता है।

आर्यजातिका धर्म्मभण्डार और सब विद्याओंका निधि संस्कृत भाषामें है। संस्कृतभाषामें सुलभ व पद्यात्मक पहिला ग्रन्थ रामायणही है और सम्पूर्ण रामायणका सार इस संक्षिप्तमूलरामायणमें है। इससे संस्कृताभिलाषियोंको शीघ्र व सुलभतासे संस्कृतभाषाका ज्ञान प्राप्त होता है।

इसकी प्रकाशनामक टीका मैंने लिखी है। जिसमें

रामायणके श्लोकके प्रत्येक शब्दके सम्पूर्ण अर्थोंका बोधक कोष ( नामकोष और क्रियाकोष ); प्रयोग (कर्ता कर्म क्रिया ); विभक्त्यर्थनिर्देश (सब पदोंका परस्पर संबन्ध), अन्वय,और व्याख्या है। व्याख्यामें समस्तपदोंका विग्रह और समासका नाम दिया है। नामकोषमें प्रत्येक पदका लिङ्ग और क्रियाकोषमें प्रत्येक धातुका गण और परस्मैपद आत्मनेपद निर्दिष्ट है, तथा उनके मूल स्वरूपका व पाणिनीयधातुसूत्रोंका टिप्पणीमें उल्लेख किया है। कठिनशब्दोंके प्रकृति प्रत्यय भी सूत्रसहित टिप्पणीमें लिखे हैं। अत एव इस टीका की सहायतासे संस्कृताभिलाषियोंको गुरूकी अल्पसहायतासे संस्कृत-भाषाका पूर्ण बोध शीघ्र व दृढ प्राप्त होता है। इस रीति से ३२ श्लोक अध्ययन करनेसे पद पदार्थ और अन्वय आदिका ज्ञान छात्रको शीघ्र ही पूर्ण होता है इस अनुभवसे वृथा ग्रन्थवृद्धिके कारण आगे विभक्त्यर्थ निर्देश नहीं दिया गया है।

विद्वद्वर पं० गोपीनाथ कविराज,एम० ए० (लाइब्रेरीयन सरस्वती भवन, और सामयिक प्रिन्सिपल संस्कृत कालिज बनारस, महोदयजीकी

( I have gone through its contents carefully and found then really useful. I believe the students, for whom the book is intended and

whose needs and difficulties have always been kept in view in preparing the notes, will be greatly benifited by this edition.) इन शब्दोंमें सम्मति प्राप्त होनेसे विश्वास होता है कि इससे संसारको बहुत लाभ होगा। अत एव इसे मैं मुद्रित कराकर प्रकाशित करता हूं। संस्कृताभिलाषी लोग इससे पूर्ण लाभ उठा कर मेरे परिश्रमको सफल करें।

निवेदकः—
गोपाल शास्त्री नेने
काशी।

## शोधपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| षिङ्गे | षिङ्गे | २ | ७ |
| ७ | ८ | ४७ | १७ |
| ८ | ९ | ४८ | ४ |
| कुटुम्बिनी । म० | कुटुम्बिनी । पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता । म० | ५३ | १२ |
| पूर्वा एते स्युः | पूर्वास्तुल्यत्वे | ६४ | ५ |
| ६ | २ | ११७ | ११ |
| विष्पति | निष्पति | १४४ | १३ |

---

सप्रकाशं

# मूलरामायणम्

गणेशगुरुपादाब्जसेवनाल्लब्धबुद्धिना ।
रामायणप्रकाशोऽयं गोपालेन वितन्यते ॥ १ ॥

तत्र प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं विषयप्रवेशार्थं च वस्तुनिर्देशात्मकं मङ्गलं विदधाति—

**तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।**
**नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥**

१तपस्—तपो लोकान्तरे पुण्ये धर्मे कृच्छ्रादिकर्मणि । ना०
२स्वाध्याय-स्वाध्यायःस्याज्जपःसुत्याभिषवः सवनंचसा। ब्र.
३रत—रतं गुह्ये मैथुनेऽनुरक्ते तु त्रिषु तत्परे । ना०
४तपस्विन्-तपस्वी तापसः पारिकाङ्क्षी,वाचंयमो मुनिः। ब्र०
५वाच्—ब्राह्मी तु भारती भाषा गीर्वाग् वाणी सरस्वती ।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ श०
६विद्—ज्ञाने वेत्त्यथ संवादे संवित्ते, भुवि विद्यते ।

---

१ तपस्–न० २ रत–पुं, न, रता–स्त्री० ३ तपस्विन्–पुं० ४ पारिकाङ्क्षिन्–पुं०
५ गिर्–स्त्री, वाच्–स्त्री० ६ वचस्–न० ७ विद ज्ञाने–अ० ग० प० वेत्ति
८ विद सत्तायाम्–दि० ग० आ०

उदाहृतोऽकर्मकस्तु खेदे निर्विद्यते इति ॥
विन्दते[1] विन्दति प्रोक्तो लाभेऽथ परिपूर्वकः ।
ज्येष्ठेऽनूढे विवाहेऽथ विन्ते[2] प्रोक्तो विचारणे ॥
दशमे आत्मनेमात्रः प्रोक्तो वेदयते[3] इति ।
समाप्तौ वास आख्याने सुखाद्यनुभवेऽपि च ॥ ना० क्रि०

७वर–वरो जामातरि वृतौ देवतादेरभीप्सिते ।
षिङ्गे पुंसि, त्रिषु श्रेष्ठे, कुङ्कुमे तु नपुंसकम् ॥
वरी प्रोक्ता शतावर्यां, वरा च स्यात् फलत्रिके ।
ईषत्प्रिये वरं क्लीवं, केचिदाहुस्तदव्ययम् ॥ ना०

८नर–नरोऽश्वे मनुजेऽर्जुने । ना०

९दो–दाति[4] द्यति[5] छ्यति[6] तथा त्रुट्यति[7] त्रुटति स्मृताः ।
षष्ठे चुटति[8] खुरति[9] छुरति[10] कृन्तति[11] स्मृताः ॥
दशमे कुण्डयति[12] च खण्डयत्यात्मनेऽपि[13] च ।
चुण्टयत्युभयोः[14] खुण्डयति[15] कुट्टयते[16] तु च ॥

---

१विद्ऌ लाभे–तु० ग० उ०
२विद विचारणे–रु० ग० आ० ३विद चेतनाख्याननिवासेषु–चु० ग० आ०
४दाप् लवने–अ०ग०प० ५दो अवखण्डने–दि०ग०प० ६छो छेदने दि०ग०प०
७त्रुट छेदने–तु० ग० प० 'वा भ्राश' ( पा० सू० ३-१-७० ) इति श्यन् वा।
८चुट छेदने–तु० ग० प० ९खुर छेदने–तु० ग० प०
१०छुर छेदने–तु०ग०प० ११कृती छेदने–तु०ग०प० १२कुडि भेदने–चु०ग०उ०
१३खडि भेदने–चु० ग० उ० १४ चुटि छेदने–चु० ग० उ० १५ खुडि खण्डने
चु० ग० उ० १६कुट्ट छेदनभर्त्सनयोः–चु० ग० आ०

श्रोटयत्यात्मनेमात्रश्चोटयत्यपि छेदने । शू० क्रि०

१०परि–परि समन्ततोभावप्राप्तिदोषकथासु च ।

भाषाश्लेषे पूजने च वर्जने वसने शुभे ॥ ना०

११प्रच्छ–प्रश्ने पृच्छत्यात्मने तु ह्याङ्पूर्वःपरिकीर्तितः ।

संपृच्छते वितर्केऽयं प्रच्छ षष्ठे उदाहृतः ॥ ना० क्रि०

१२वल्मीक–वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम् । मू०

१३पुङ्गव–स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।

सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः ॥ वि०

मुनि १–४ । वाल्मीकिः नारदम् (को न्वस्मिन् इत्यादि वक्ष्यमाणम्) परिपप्रच्छ द्विकर्मककर्तरिप्रयोगः । अत्र 'वाल्मीकिः' कर्तृपदम्, 'नारदम्' गौणकर्म, 'वक्ष्यमाणम्' अध्याहृतं प्रधानकर्म, परिपप्रच्छ क्रियापदम् ।

विभक्त्यर्थनिर्देशः–

तपःस्वाध्यायनिरतम्–अकारान्तपुंलिङ्ग'तपःस्वाध्याय-निरत' शब्दस्य द्वितीयैकवचनान्तं गौणकर्मविशेषणम् । तपस्वी–इन्नन्तपुंलिङ्ग 'तपस्विन्'शब्दस्य प्रथमैकवचनान्तं कर्तृविशेषणम् ।

---

१ श्रुट छेदने क्रुट इत्येके-चु० ग० आ०

२ चुट छेदने—चु०ग०उ० ३ परि-अव्ययम् ४ प्रच्छ ज्ञीप्सायाम्-तु० ग० प०

५ ऋषभ—पुं०

वाग्विदाम्—दकारान्तपुंलिङ्ग'वाग्विद्'शब्दस्य षष्ठीबहुवचनान्तं निर्धारणबोधकम् ।

वरम्—अकारान्तपुंलिङ्ग 'वर' शब्दस्य द्वितीयैकवचनान्तं गौणकर्मविशेषणम् ।

नारदम्—अकारान्तपुंलिङ्ग 'नारद' शब्दस्य द्वितीयैकवचनान्तं गौणकर्म ।

परिपप्रच्छ—तुदादिगणिपरस्मैपदिप्रश्नार्थकपरिउपसर्गपूर्वक'प्रच्छ' धातोः कर्तरिलिट्लकारप्रथमपुरुषैकवचनान्तं क्रियापदम् ।

वाल्मीकिः—इकारान्तपुंलिङ्ग 'वाल्मीकि' शब्दस्य प्रथमैकवचनान्तं कर्तृपदम् ।

मुनिपुङ्गवम्—अकारान्तपुंलिङ्ग 'मुनिपुङ्गव' शब्दस्य द्वितीयैकवचनान्तं गौणकर्मविशेषणम् ।

अन्वयार्थौ[1]—

तपस्वी तपः रामनामजपादिकर्म अस्ति यस्य सः तपस्वी[2](त० वृ०) वाल्मीकिः वल्मीकस्य पिपीलिकादिकृतगृहस्य अपत्यं पुमान् ( तत्र जात इत्यर्थः ) वाल्मीकिः[3] ( त० वृ० )

---

१ कर्तृकर्मक्रियायुक्तश्चान्वयोऽकर्मकोऽपि सः । विशेषणं पुरस्कृत्य विशेष्यं तदनन्तरम् ॥ आदौ कर्तृपदं वाच्यं द्वितीयादिपदं ततः । क्त्वा तुमुन्ल्यप् च मध्ये तु कुर्यादन्ते क्रियापदम् ॥

२ तपस्शब्दात् 'तपःसहस्राभ्यां विनीनी'(पा०सू० ५-२-१०२)इति विनिप्रत्ययः

३ वल्मीकशब्दात् 'अत इञ्' ( पा० सू० ४-१-९५ ) इति अपत्येऽर्थे इञ्।

वाल्मीकिनामा ऋषिः तपःस्वाध्यायनिरतम् तपः ब्रह्मचर्यादिकर्म च स्वाध्यायः वेदाभ्यासः च तपःस्वाध्यायौ (इ० द्व० ), नितराम् अत्यन्तं चासौ रतः आसक्तः च निरतः (वि०उभ०क०) तपःस्वाध्याययोः निरतः तपः-स्वाध्यायनिरतः(स०त०) तं तपःस्वाध्यायनिरतम् वाग्विदाम् विदन्ति जानन्ति ते विदः[1](कृ०वृ०)वाचां विदः वाग्विदः (ष० त०) तेषां वाग्विदाम् मध्ये वरं श्रेष्ठं मुनिपुङ्गवं मुनिषु मननशीलेषु पुङ्गवः श्रेष्ठः मुनिपुङ्गवः(स० त०) तं मुनिपुङ्गवं नारदं नरस्य मनुष्यस्य इदं नारम्[2](त० वृ०) नारम् अज्ञानं द्यति छिनत्ति सः नारदः[3] ( उ० त० ) तं नारदं नारदनामकं सुरर्षि वक्ष्यमाणं परिपप्रच्छ पूजन-पूर्वकं पृच्छति स्म ।

अस्मिन् सर्गेऽन्तिमं श्लोकं वर्जयित्वा सर्वेषामनुष्टुप्छन्दः । 'द्वात्रिंशदक्षराऽनुष्टुप्' इति छान्दसस्मरणात् ॥१॥

**को न्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान्।**
**धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥ २ ॥**

---

१ विद् धातोः कर्तरि 'क्विप् च' (पा०सू० ३-२-७६)इति क्विप् ततो वाच्शब्देन समासः । २ नरशब्दात् 'तस्येदम्' (पा०सू० ४-३-१२०)इति अण् प्रत्ययः। ३ नारम् उपपदकाद् दो धातोः 'आतोऽनुपसर्गे कः' ( पा० सू० ३-२-३ ) इति कप्रत्ययः ।

१किम्—किं[1] वितर्के परिप्रश्ने क्षेपनिन्दाप्रकारयोः । ना०
२नु—नु[2] प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः । ना०
३इदम्—इदं[3]मस्तु सन्निकृष्टे समीपतरवर्ति चैत[4]दो रूपम् ।
अद[5]सस्तु विप्रकृष्टे त[6]दिति परोक्षे विजानीयात् ॥ सं०
४सांप्रतम्—एतर्हि संप्र[7]तीदानीमधुना सांप्रतं तथा । अ०
५लोक—आकाशे त्रिदिवे नाको, लोकस्तु भुवने जने।ना०
६गुण—गुणो मौर्व्यामप्रधाने रूपादौ[8] सूद इन्द्रिये ।
त्यागे शौर्यादिसं[9]त्त्वादिसन्ध्यां[10]द्यावृत्तिरज्जुषु ॥
शुक्लादावपि वट्टयां च कथितस्तु मनीषिभिः । ना०
७च—चो[11]ऽन्वाचयसमाहारेतरेतरसमुच्चये ।
पादस्य पूरणे पक्षान्तरे हेतौ विनिश्चये ॥ ना०
८वीर्य—शुक्रेऽतिशक्त्युत्साहे च वीर्यं तेजःप्रभावयोः । ना०
९धर्म—धर्माः पुण्ययमन्यायस्वभावाऽऽचारसोमपाः ।
अहिंसोपनिषद्यागा उपमा च तथा स्मृताः ॥ ना०
१०ज्ञा—अवबोधे च जा[12]नाति जा[12]नीते, स्मरणे त्वयम् ।

---

१ किम्- त्रि. २ नु—अव्ययम् । ३इदम् त्रि० ४एतद्—त्रि०
५ अदस्—त्रि० ६ तद्—त्रि० ७ सम्प्रति, इदानीम्, अधुना—अ०
८ रूपरसगन्धस्पर्शादितार्किकप्रसिद्धाः ।
९ सत्त्वरजस्तमोरूपाः । १० सन्धि—विग्रह—यान—आसन—द्वैध-समाश्रया षड् राजगुणाः । ११ च—अव्य० १२ ज्ञा अवबोधने—क्र्या०ग०उ०

अभिपूर्वस्तिरस्कारे त्ववपूर्वोऽथ संमतौ ॥
अनुपूर्वोऽथ प्रारम्भे उपपूर्वोऽथ निह्नवे ।
अपजानीत एव स्यात्, संजानीते प्रवर्तने ॥
प्रतिज्ञायां संश्रवेऽपि प्रतिजानीत एव च ।
मित् णिजन्तो ज्ञपयति मारणे च निशामने ॥
तोषे क्वचिन्निशानेऽथ बोधने ज्ञापयत्ययम् ।
णिचि प्रयोजके स्वार्थेऽप्याज्ञायामाङ्परो मतः॥ना०क्रि०

११कृ—करोति कुरुते ज्ञेयौ करणे ऽनुकरोति तु ।
अनुकारे, दुष्करोति दुःकरोति च दुष्कृतौ ॥
मार्जने ऽवकरोति स्यात्प्रतीकारे तु कीर्तितः ।
प्रतिकरोति, शुद्धौ तु परिष्करोति च स्मृतः ॥
वञ्चने ऽपकरोति स्यान्निरासे ऽपाकरोति हि ।
प्रकाशने व्याकरोति, भूषणे ऽलङ्करोति च ॥
संस्करोति, धनुःशब्दे चिङ्करोति, रथध्वनौ ।
चीत्करोति, तथा विप्रकरोति स्यादनादरे ॥
विलम्बने तु समयाकरोति परिकीर्तितः ।
उपकारे तूपपूर्वोऽधिकारे त्वधिपूर्वकः ॥
तिरस्करोति चान्तर्धावनादरणकर्मणि ।

---

१ डुकृञ् करणे त०उ० ।

भद्रा मद्रा तथा भद्रं मद्रमेभ्यस्तु मुण्डने ॥
आकारयति चाह्वाने, प्रकारे प्रकरोति हि ।
स्युः षड्विंशतिसंख्याका उभयोः पदयोरिमे ॥
साहसे तु प्रकुरुते उपयोगे कथासु च ।
भर्त्सने तूदाकुरुते क्षमाऽभिभवयोर्मतः ॥
तथाऽधिकुरुते चोपस्कुरुते सेवने मतः ।
प्रतियत्नेऽथोत्कुरुते हिंसार्थं सूचने स्मृतः ॥
प्रसिद्धान्योपपदकास्तत्तत्कर्मणि संमताः । ना० क्रि०

१२सत्य–सत्यं कृतयुगे तथ्ये शपथे त्रिषु तद्वति । ना०

१३वाक्य–तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता।श०

१४दृढ–कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् ।
जरठं, मूर्तिमत्[1] मूर्तं, प्रवृद्धं प्रौढमेधितम्[2] ॥ वि०

१५व्रत–नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम् । ब्रह्म०

कःअस्तिअकर्मककर्तरि प्रयोगः । अत्र 'कः' कर्तृपदम्, 'अस्ति'अध्याहृतं क्रियापदम् ।

कः–म० पुं० 'किम्' श० प्र०ए० कर्तृपदम् । एवमग्रे।

नु–प्रश्नार्थकमव्ययम्[3] ।

---

१ मूर्तिमत्–न० मूर्तिमान्–पु० मूर्तिमती–स्त्री० । २ एधित–पु० न० एधिता–स्त्री । ३ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

अस्मिन्–म०पुं०'इदम्' श०स०ए०आधारविशेषणम् ।
साम्प्रतम्–आधारशक्तिप्रधानं वर्तमानकालबोधकमव्ययम्
लोके–अ०पुँ०'लोक' श० स० ए० आधारबोधकम् ।
गुणवान्–अत्वन्तप्रत्ययान्तपुं० 'गुणवत्'श० प्र० ए०
कर्तृविधेयविशेषणम् । कः ।
च–समुच्चयार्थकमव्ययम् । एवमग्रे ।
वीर्यवान् अत्वन्तप्र०पुं० 'वीर्यवत्'श०प्र०ए०कर्तृवि०वि०
धर्मज्ञः–अ०पुं०'धर्मज्ञ'श०प्र०ए०कर्तृवि०वि० । च ।
कृतज्ञः–अ०पुं०'कृतज्ञ'श०प्र०ए०कर्तृवि०वि० । च ।
सत्यवाक्यः-अ०पुं०'सत्यवाक्य'श०प्र०ए०कर्तृवि०वि०
दृढव्रतः–अ०पुं०'दृढव्रत'श०प्र०ए०कर्तृवि०वि० ।

कः अस्मिन् लोके भूलोके सांप्रतम् इदानीम् गुणवान् गुणाः शौर्यचातुर्यादयः सान्ति यस्य सः गुणवान् (त० वृ०) शौर्यादिगुणसंपन्नः पुरुषः अस्ति? । एवं सामान्यगुणिनं पृष्ट्वा कैः कैर्गुणैर्युक्त इति विशेषजिज्ञासायां तद्विशेषं पृच्छति–वीर्यवानित्यादिना । कः च वीर्यवान् वीर्यं प्रबलोत्साहः अस्ति यस्य सः वीर्यवान् (त० वृ०) धर्मज्ञः धरति रक्षति लोकान् नरकादिपातात् सः धर्मः

---

१ "तदस्यास्त्यस्मिन्निति मतुप्"(पा०सू० ५—२—९४)इति मतुप्।

(कृ० वृ० ) धर्मं सदाचारं जानाति सः धर्मज्ञः ( उ० त० ) च अधर्मज्ञः कृतज्ञः कृतम् उपकारं जानाति सः कृतज्ञः ( उ० त० ) उपकारस्मर्ता च अकृताज्ञः अपकारविस्मर्तेति यावत् सत्यवाक्यः सत्यं सङ्कटेष्वप्यनृतशून्यं वाक्यं वचनं यस्य सः सत्यवाक्यः (ष०व०) दृढव्रतः दृढं क्रूरं निश्चलमित्यर्थः व्रतं नियमो यस्य सः दृढव्रतः ( ष० ब० ) अस्ति नु ? ॥ २ ॥

चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः॥३॥

१चारित्र-वृत्तान्तेसुस्वभावेचारित्रचरित्रचरीत्रचरितानि।ना०
२युज्-योगे युनक्ति युंक्ते च समाधौ युज्यते तथा ।
प्रयुङ्क्ते तु प्रयोगेऽथाऽनुयुङ्क्ते प्रश्नकर्मणि ॥
अभियोगेऽभियुङ्क्तेऽथोद्युङ्क्ते उद्योगकर्मणि ।
आज्ञायां तु नियुङ्क्ते ऽथोपयुङ्क्ते भोजने तथा ।
उपयोगे, वियोगे तु वियुङ्क्ते स्युः सकर्मकाः ।
सोपसर्गो युज्यते तु प्रोक्तेष्वर्थेष्वकर्मकः ।
संयमे योर्जयतिच द्वयोर्योजेत्यापिस्मृतः ॥ ना०क्रि०
३सर्व-गणनीयेतुगणेयं, संख्याते गणितमथसमं सर्वम् ।

१ ज्ञाधातोः "आतोऽनुपसर्गे कः" (पा० सू० ३—२—३) इति कर्तरि कः ।
२ युजिर् योगे—रु० उ० ३ युज समाधौ—दि आ० ४ युज संयमने—चु० प० विभाषितो णिच् ।

विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निःशेषम्।
समग्रं सकलं पूर्णमखण्डं स्यादनूनके। वि०

४भूत—भूतं न्याय्ये समे प्राप्ते यथार्थातीतयोस्त्रिषु।
क्लीबं सत्ये पिशाचादौ भूम्यादौ जन्तुसत्त्वयोः॥ ना०

५हित—हितं पथ्ये मङ्गले च, मित्रे इष्टे धृते त्रिषु। ना०

६विद्वस्—विद्वानात्मविदि प्राज्ञे पाण्डिते चाभिधेयवत्। ना.

७समर्थ—समर्थस्त्रिषु शक्तिस्थे संबद्धार्थे हितेऽपि च। ना.

८एक—एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते॥ ना.

९प्रिय-अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्। वि.

१०दृश्—अक्ष्णाऽवलोकने पश्यत्यवबोधेऽपि च क्वचित्।
वितर्के तु पश्यति स्याद् दृशिर् भ्वादौ प्रकीर्तितः॥ना.क्रि.

चर—७ किम्२—१। कः अस्ति। अकर्मककर्तरिप्रयोगाः।
अत्र 'कः' कर्तृपदम् 'अस्ति' अध्याहृतं क्रियापदम्।
चारित्रेण अ०न०'चारित्र'श०तृ०ए०युजधातोः करणम्।
च—समुच्चयार्थकमव्ययम्। एवमग्रे सर्वत्र।
कः—म०पुं०'किम्'श०प्र०ए० कर्तृपदम्। एवमेव सर्वत्र।
युक्तः—अ० पु० 'युक्त' श०प्र०ए०कर्तृविधेयविशेषणम्।

---

१ अखण्ड—त्रि० २ अनूनक—त्रि० ३ विद्वस पु० न० विदुषी स्त्री०।
४ दृशिर् प्रेक्षणे—भ्वा०प० पश्यति।

सर्वभूतेषु अ०न०'सर्वभूत' श० स०ब० विषयबो०।कः।
हितः—अ० पुँ० 'हित' श० प्र०ए० कर्तृविधेयविशेषणम्।
विद्वान्—वस्वन्तपुं० 'विद्वस्' श० प्र० ए० कर्तृवि० वि०।
समर्थः—अ०पुं० 'समर्थ' श०प्र०ए०कर्तृविधेयविशेषणम्।
एकप्रियदर्शनः—अ०पुं०'एकप्रियदर्शन'श०प्र०ए० कर्तृ-वि० वि०।

कः चारित्रेण सुस्वभावेन युक्तः संपन्नः अस्ति ? । कः सर्वभूतेषु सर्वाणि सकलानि च तानि भूतानि प्राणिनश्च सर्वभूतानि(वि०पू०क०)तेषु सर्वभूतेषु सर्वप्राणिविषये हितः पथ्यः अनुकूल इत्यर्थः अस्ति ?। कः विद्वान् वेत्ति जानाति सर्वशास्त्राणि सः विद्वान् (कृ०वृ०) सर्वशास्त्रज्ञः अस्ति ?। कः समर्थःशक्तिमान् अस्ति ? । कः च एकप्रियदर्शनः एकं केवलं च तत् प्रियं च एकप्रियम् (वि०उभ०क०), दृश्यते तत दर्शनम् (कृ० वृ०), एकप्रियं दर्शनं शरीरं यस्य सः एकप्रियदर्शनः ( ष० ब० ) अस्ति ?॥ ३॥

**आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः।**
**कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥४॥**

१आत्मन्—आत्मा कलेवरे यत्ने स्वभावे परमात्मनि।

---

१ विदधातोः कर्तरि शतुर्वसुरादेशः "विदेः शतुर्वसुः"(पा० सू० ७—१—३६) इति सूत्रेण। २ दृशधातोर्भावे ल्युट् अनादेशः। ३ आत्मन्—पु०।

चित्ते जीवे तथा बुद्धौ परव्यावर्तने धृतौ ॥ ना॰

२जित–अभिभूतं पराभूतं परिभूतं पराजितम् ।
भग्नं जितं च त्रिष्वेते शब्दाः प्राप्तपराजये[1] ॥ वि॰

३क्रोध–कोपक्रोधाऽमर्षरोषप्रतिघा रुट्[2]क्रुधौ स्त्रियौ । नाख्य॰

४द्युति–सुषमा परमा शोभा, शोभा कान्तिर्द्युतिश्छविः । दि॰

५नञ्–तत्सादृश्यं तदन्यत्वं तदभावस्तदल्पता ।
अप्राशस्त्यं विरोधश्च षडर्थेषु नञव्ययम् । ना॰

६असूया–अक्षान्तिरीर्ष्या[3]ऽसूया तु दोषारोपो गुणेष्वपि । नाख्य॰

७भी–भीतौ बिभेति[4] त्रसति[5] त्रस्यति व्यथते[6]ऽपि च ।
भेषति[7] भ्यसते[8] दर्भयति[9] दर्भति च स्मृतः ॥
विनक्ति विजते[10] भाय उत्पूर्वोऽयं प्रयुज्यते । मनःक्रि॰

८देव–अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः ।
सुपर्वाणः[11] सुमनसः[12] त्रिदिवेशा दिवौकसः[13] ॥
आदितेया दिविषदो[14] लेखा अदितिनन्दनाः ।
आदित्या ऋभवो[15]ऽस्वप्ना अमर्त्या अमृतान्धसः[16] ॥

---

१ प्राप्तः पराजयो यं तस्मिन्नर्थे एते अभिभूतादिशब्दाः ।
१ रुष्—स्त्री॰ क्रुध्—स्त्री॰ । ३ ईर्ष्या । ४ ञिभी भये—जु॰ प॰ ।
५ त्रसी उद्वेगे—दि॰ प॰ श्यन्विकल्पः ६ व्यथ भयचलनयोः—भ्वा॰ आ॰ ।
७ भेषृ भये—भ्वा॰ प॰ । ८ भ्यस भये-भ्वा॰ आ॰ ।
९ दृभी भये—चु॰ प॰ विभाषितणिच् । १० ओविजी भयचलनयोः रु॰ प॰ विनक्ति; तु॰ आ॰ विजते ११ सुपर्वन्–पु॰ १२ सुमनस्
१३ दिवौकस् १४ दिविषद् पु॰ १५ ऋभु १६ अमृतान्धस् ।

बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः ।
वृन्दारका दैवतानि पुंसि वा, देवता स्त्रियाम् ॥ स्व०
९जात–जातं जनिसमूहयोः । ना०
१०संयुग–युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् ।
मृधमास्कन्दनं संख्यं समीकं सांपरायिकम् ॥
अस्त्रियां समराऽनीकरणाः, कलहविग्रहौ ।
संप्रहाराऽभिसंपातकलिसंस्फोटसंयुगाः ॥
अभ्यामर्दसमाघातसङ्ग्रामाऽभ्यागमाऽऽहवाः ।
समुदायः स्त्रियः संयत्समित्याऽऽजिसमिद्युधः । क्ष०

किम् २–१ च २–७ रोष ४–३ । कः (अस्ति) २,
देवाः बिभ्यति अकर्मकप्रयोगाः ।

आत्मवान् अत्वन्तप्र०पु० 'आत्मवत्' श०प्र०ए० कर्तृवि०वि०
कः–म० पुं० 'किम्' श०प्र० ए० कर्तृपदम् । एवमग्रे ।
जितक्रोधः–अ०पु० 'जितक्रोध' श०प्र०ए०कर्तृवि०वि०।
द्युतिमान् अत्व०पु० 'द्युतिमत्' श०प्र०ए०कर्तृवि० वि०।कः
अनसूयकः–अ०पुं० 'अनसूयक' श०प्र०ए०कर्तृवि०वि०।
कस्य–म० पु० 'किम्' श० ष० ए० सम्बन्धबोधकम् ।
बिभ्यति–जुहो० प० भयार्थक 'भी' धातोः कर्तरिलट्०
प्र० ब० क्रि० ।

---

१ क्रतुभुज् । २ दानवारि ३ समिति—स्त्री ४ युध्—स्त्री ।

देवाः-अ० पु० 'देव' श० ष० व० कर्तृपदम् ।
च-समुच्चयार्थकमव्ययम् ।
जातरोषस्य-अ० पु० 'जातरोष'श०ष०ए०सम्ब०वि० ।
संयुगे-अ० पुं० 'संयुग' श० स० ए० अधिकरणम् ।
कः आत्मवान् आत्मा धैर्यम् अस्ति यस्य सः आत्मवान् (त० वृ०) अस्ति । कः जितक्रोधः जितःवशीकृतः क्रोधः येन सः जितक्रोधः (तृ० व०) द्युतिमान् द्युतिः कान्तिः अस्ति यस्य सः द्युतिमान् (त० वृ०) अनसूयकः न नास्ति असूया परगुणेषु दोषारोपणबुद्धिर्यस्य सः अनसूयकः (ष० ब०) अस्ति । देवाः च सुराः असुराश्च जातरोषस्य जातः उत्पन्नः रोषः क्रोधो यस्य सः जातरोषः (ष० व०) तस्य जातरोषस्य कस्य संयुगे युद्धे बिभ्यति भयं प्राप्नुवन्ति ? ॥ ४ ॥

**एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।**
**महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधंनरम्॥५॥**

[1]इष्-गताविष्यत्युपगतावुपेष्यति हि संस्मृतः ।
अन्विष्यत्यनुगोभ्यां तु णिजन्तोऽन्वेषणे ह्ययम् ॥
प्रेषणे तु प्रेषयति, कान्ताविच्छति[2] च स्मृतः ।
प्रतीच्छति तु आदाने, सत्कारेऽधीच्छति स्मृतः ।

---

१ इष गतौ दि० ग० प० इष्यति २ इष(इच्छ)इच्छायाम् तु०ग०प०इच्छति ।

पुनःपुनःक्रियायां तु क्र्यादाविष्णाति च स्मृतः ना. क्रि.
२ अस्मद्-युष्मच्छब्दस्तुसम्बोध्येस्वस्मिन् अस्मदिमौ त्रिषु
३श्रु-भ्वादौ शृणोति श्रवणे, संशृणोत्याशृणोत्ययम् ।
प्रतिज्ञायां, प्रार्थिताङ्गीकारे प्रतिशृणोत्ययम् ॥
शुश्रूषते तु सेवायामिच्छायां श्रवणस्य च । ना० क्रि०
४पर-परः श्रेष्ठाऽरिदूरान्योत्तरे क्लीवं तु केवले । ना०
५कौतूहल-कौतूहलं कौतुकं च कुतुकं च कुतूहलम् । नाव्य०
६हि-हि पादपूरणे हेतौ विशेषेऽप्यवधारणे ।
प्रश्ने हेत्वपदेशे च सम्भ्रमासूययोरपि ॥ ना०
७महत्-विशङ्कटं पृथु बृहद् विशालं पृथुलं महत् ।
वड्रोरु विपुलं पीनपीव्नी तु स्थूलपीवरे ॥ वि०
८ऋषि-ऋषयःसत्यवचसःस्नातकस्त्वाप्लुतो व्रती । व्र०
९अस्-सन्दीप्त्यादानगतिषु असति प्रथमे गणे ।
भवने ऽस्ति, क्षेपणेऽस्यत्युपतापेऽसूयति ।
विपर्यस्यति तु भ्रान्ताविच्छोद्योगे व्यत्यस्यति ॥

---

१. इष आभीक्ष्ण्ये—क्र्या० ग० प० इष्णाति ।
२युष्मद्—त्रि० । ३ अस्मद्—त्रि० । ४श्रुश्रवेण-भ्वा० प० ५अव्ययम् ।
६पृथु—पुं, न, पृथ्वी—स्त्री० ७बृहत्—पुं,न, बृहती—स्त्री ८उरु—पुं,न, उर्वी स्त्री
९ पीवन्—पु, न, पीव्नी—स्त्री १०ऋषि ११व्रतिन्-पु०
१२ अस गतिदीप्त्यादानेषु भ्वा० ग० प० १३अस भुवि अ० ग० प०
१४ असु क्षेपणे दि० ग० प० अस्यति १५ असु उपतापे, क०ड दि० प०

अभ्यासेऽभ्यस्यति तथा संक्षेपे तु समस्यति ।
तथा व्यस्यति विस्तारे, निक्षेपे न्यस्यति स्मृतः ।
संन्यस्यति तु संन्यासे, व्युदस्यति तु वर्जने ॥
प्रास्यत्यपास्यति तथा निरस्यति निराकृतौ । ना० क्रि०

१०एवम्–एवं प्रकारोपमयोरङ्गीकारेऽवधारणे । ना०

११विधा–विधा गजान्ने रुद्धौ च प्रकारे वेतने विधौ । ना०

एतद् २–३ युष्मद् ५–२ समर्थ ३–७ ज्ञा २–१० नर १–८ । अहं श्रोतुम् इच्छामि सकर्मकप्रयोगः । त्वम् असि, कौतूहलम् अस्ति अकर्मकप्रयोगौ ।

एतद्–द० न० 'एतद्' श० द्वि० ए० तुमुनन्तकर्म ।
इच्छामि-तु०प०इच्छार्थक'इष'धा०कर्त०लट्०उ०ए० क्रि०
अहम्–द० पु० 'अस्मद्' श० प्र० ए० कर्तृपदम् ।
श्रोतुम्–तुमुनन्तमव्ययं कर्मपदम् ।
परम्–अ० न० 'पर' श० प्र० ए० कर्तृवि० ।
कौतूहलम्–अ० न०'कौतूहल'श० प्र० ए० कर्तृपदम् ।
हि–हेत्वर्थकमव्ययम् ।
मे–द० पुं० 'अस्मद्' श० ष० ए० सम्बन्धबोधकम् ।
महर्षे–इ० पु० 'महर्षि' श० सम्बो० ए० ।
त्वम्–द० पु० 'युष्मद्' श० प्र० ए० कर्तृपदम् ।
समर्थः–अ० पु० 'समर्थ' श०प्र०ए० कर्तृवि०वि० ।

असि–अ० प० सत्तार्थक 'अस्' धातोः कर्तरिलट्०
म० ए० क्रि० ।

ज्ञातुम्–तुमुनन्तमव्ययम् ।

एवंविधम्–अ०पु०'ए–ध'श०द्वि०ए०तुमुनन्तकर्मवि० ।

नरम्–अ० पु० 'नर' श० द्वि० ए० तुमुनन्तकर्म ।

अहम् एतद् पूर्वोक्तं श्रोतुम् इच्छामि । हि यस्मा-त्कारणात् मे मम एतच्छ्रवणे परम् अत्यन्तं कौतूहलं कौतुकम् अस्ति । महर्षे महान् चासौ ऋषिः च महर्षिः (वि० पू० क०) तत्संबुद्धौ हे महर्षे नारदऋषे त्वम् एवं-विधम् एवं पूर्वोक्ताः विधाः प्रकाराः गुणाः यस्य सः एवं-विधः ( ष० ब० ) तम् एवंविधं नरं पुरुषं ज्ञातुं सम-र्थः शक्तः असि ॥ ५ ॥

**श्रुत्वा चैतत् त्रिलोकज्ञो वाल्मीकेर्नारदोवचः**
**श्रूयतामिति चामन्त्र्य प्रहृष्टोवाक्यमब्रवीत्॥**

१वाल्मीकि-प्राचेतसश्चाऽऽदिकविःस्यात् मैत्रावरुणिश्चसः
वाल्मीकिश्चाथ गाधेयो विश्वामित्रश्च कौशिकः ॥
व्यासो द्वैपायनः पाराशर्यः सत्यवतीसुतः । ब्र०

२नारद–व्योमयानं विमानोऽस्त्री,नारदाद्याःसुरर्षयः । स्व०

३इति–इति स्वरूपे सांनिध्ये विवक्षानियमेऽपि च ।

हेतौ प्रकारप्रत्यक्षप्रकाशेष्ववधारणे ॥
एवमर्थे समाप्तौ च कथितस्तु मनीषिभिः । ना०
४मन्त्र-गुप्तवाचि चुरादौ च बुधैर्मन्त्रयते[1] स्मृतः ।
उपमन्त्रयते सान्त्ववाक्येऽथावश्यकर्मणि ॥
नियोगे बोधने चैव स्यात् निमन्त्रयते तथा ।
सम्बोधने कामचारानुज्ञायामाङ्परो मतः ॥
अभिमन्त्रयते ज्ञेयो मन्त्रसंस्कारकर्माणि । ना०क्रि०
५हृष्ट-हृष्टो मत्तस्तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः । वि०
६ब्रू-उक्तौ शंसति[2] चष्टे[3] च वक्ति[4] जल्पति[5] भाषते[6] ।
ब्रूते[7] ब्रवीति गदति[8] शचते[9] दिशति[10] द्वयोः ॥
द्वयोर्हापयति[11] ह्लापयति[11] कीर्तयतीति[12] च ।
तथा जपति[5] वदति[13] कथयत्युभयोः[14] स्मृतः ॥
द्वयोर्व्याहरति[15] ज्ञेयो ऽभिधत्ते[16]ऽथ गृणाति[17] च ।

---

१ मत्रि ( मन्त्र ) गुप्तपरिभाषणे-चु० ग० आ०
२ शंसु स्तुतौ-भ्वा० प०
३ चक्षिङ् व्यक्तायां वाचि-अ० आ०
४ वच परिभाषणे-अ० प०
५ जप, जल्प व्यक्तायां वाचि-भ्वा० प०
६ भाष व्यक्तायां वाचि-भ्वा० आ०
७ ब्रूञ् व्यक्तायां वाचि-अ० उ०
८ गद व्यक्तायां वाचि-भ्वा० प०
९ शच व्यक्तायां वाचि-भ्वा आ०
१० दिश अतिसर्जने-तु० उ०
११ हप ह्लप व्यक्तायां वाचि चु० उ०
१२ कृत संशब्दने-चु० उ०
१३ वद व्यक्तायां वाचि-भ्वा० प०
१४ कथ वाक्यप्रबन्धे-चु० उ०
१५ हृञ् हरणे-भ्वा० उ०वि-आ(ङ्)हृ
१६ डुधाञ् धारणपोषणयोः-जु० उ० अभि—धा
१७ गृ शब्दे-क्र्या० प०

लपं[1]त्याख्यां[2]ति रपंति उदीरयं[3]ति केवलः ॥ ना०क्रि० श्रु५–३च २–७ एतद् २–३(त्रि) लोक २–५–ज्ञा२. १०वचस् १–५ वाक्य २–१३ ।( त्वया वक्ष्यमाणं ) श्रयताम् कर्मणि प्रयोगः, नारदः ( तं ) वाक्यम् अब्रवीत द्विकर्मककर्तरिप्रयोगः ।

श्रुत्वा–त्वाप्रत्ययान्तमव्ययम् ।

च - समुच्चयार्थकमव्ययम् ।

एतत्–द० न० 'एतद्' श०द्वि० ए० त्वान्तकर्मवि० ।

त्रिलोकज्ञः–अ० पु० 'त्रिलोकज्ञ'श० प्र० ए० कर्तृवि० ।

वाल्मीकेः–इ०पु०'वाल्मीकि'श०ष०ए०सम्बन्धबोधकम् ।

नारदः–अ० पु० 'नारद' श० प्र० ए० कर्तृपदम् ।

वचः–स० न० 'वचस्' श० द्वि० ए० त्वान्तस्यकर्म ।

श्रूयताम्–भ्वा०प० श्रवणार्थक'श्रु'धातोः कर्मणिलोट् ल० प्र० ए० क्रि० ।

इति–ल्यबन्तकर्मस्वरूपबोधकमव्ययम् ।

च–हेत्वर्थकमव्ययम् ।

---

१ रप लप व्यक्तायां वाचि–भ्वा०प० २ ख्या प्रकथने–अ०प०आ(ङ्)ख्या
३ ईर गतौ कम्पने च–चु० प० विकल्पाणिच्, उद्—ईर
४ परस्मैपदिभ्योऽपि-धातुभ्यः कर्मणि भावे च आत्मनेपदं यक् च "भावकर्मणोः" ( पा० सू० १-३-१३ ) "सार्वधातुके यक्" ( पा० सू० ३-१-६७ ) इति नियमाभ्याम् ।

आमन्त्र्य—ल्यबन्तमव्ययम् ।
प्रहृष्टः—अ० पु० 'प्रहृष्ट' श० प्र० ए० कर्तृवि० वि० ।
वाक्यम्—अ० न० 'वाक्य' श० द्वि० ए० मुख्यकर्म ।
अब्रवीत् अ०उ०वचनार्थक'ब्रू'धातोःकर्तरिलङ्०प्र०ए०क्रि.
त्रिलोकज्ञः त्रयः लोकाः भुवनानि यस्मिन् तत् त्रिलोकं (स० ब० ) ब्रह्माण्डं जानाति सः त्रिलोकज्ञः (उप० त०) नारदः नारदनामा ऋषिः एतत् 'कोन्वस्मिन्' इत्यादि पूर्वोक्तं वाल्मीकेः वाल्मीकिऋषेः वचः वचनं श्रुत्वा च आकर्ण्य विचार्य च प्रहृष्टः च वाल्मीकिवचनश्रवणेन संतुष्टः सन् त्वया इदं श्रूयताम् इति आमन्त्र्य अनुज्ञाप्य तं वाक्यं 'बहवो दुर्लभाः' इत्यादि अब्रवीत् अगदत् ॥ ६ ॥

**बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।**
**मुने वक्ष्याम्यहं बुध्वा तैर्युक्तः श्रूयतां नरः ॥७॥**

१बहु—प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ।
पुरुहूः पुरु भूयिष्ठं स्फारं भूयश्च भूरि च ॥ वि०
२लभ-प्राप्तौ तु लभते ज्ञेय, आङ्पूर्वः स्पर्शने तथा ।
मारणे, तर्जने तु स्यादुपालभत इत्यथ ।

---

१ बहु-पुं, न, बह्वी, बहु-स्त्री०
२ पुरुहू-पु, स्त्री, पुरुहु-न०    ३ पुरु-पु, न, पुर्वी, पुरु-स्त्री०
४ भूयस्-पु, न, भूयसी स्त्री    ५ डुलभष् प्राप्तौ भ्वा० आ०

वञ्चने विप्रपूर्वोऽयं दुष्प्राप्तौ तु दुसः परः ।
दुरः परोऽथोपलभते ज्ञाने आत्मनेपदी ॥ ना० क्रि०

३ एव—एवाऽनियोगे सादृश्ये निश्चये पादपूरणे । ना०

४ यद्—तच्छब्दग्राह्ये वुद्धिस्थे त्रिषु यत्,कारणेऽव्ययम् ।

५ बुध—बुध्यते बोधति ज्ञाने, ज्ञापने बोधते द्वयोः ।
प्रबोधते जागरणे ऽकर्मकस्तु प्रबुध्यते ॥
उद्बुध्यते तथोद्बोधत्युत्प्रेक्षायां द्वयोरयम् ।
उत्तेजने णिजन्तोऽयमुद्बोधयति कीर्तितः ॥ ना० क्रि०

च २–७ युष्मद् ५–२ कृत ६–६ गुण २–६
मुनि १–४ ब्रू ६–६ अस्मद् ५–२ तद् २–३ युज्–३–
श्रु५–३ नर १–८। त्वया गुणाः कीर्तिताः कर्मणिप्रयोगः।
अहं (त्वां वक्ष्यमाणं) वक्ष्यामि द्विकर्मककर्तरिप्र० ।

बहवः–उ० पुं० 'वहु' श० प्र० ब० कर्मविशेषणम् ।
दुर्लभाः–अ० पुं० 'दुर्लभ' श० प्र० ब० कर्मविशेषणम् ।
च–समुच्चयार्थकमव्ययम् ।
एव–निश्चयार्थकमव्ययम् ।
ये–द० पुं० 'यद्' श० प्र० ब० कर्मविशेषणम् ।

---

१ यद्–त्रि० २ बुध अवगमने–दि० आ०
३ बुध अवगमने–भ्वा० प०  ४ बुधिर् बोधने–भ्वा० उ०

त्वया–द० पुं० 'युष्मद्' श० तृ० ए० कर्तृपदम् ।
कीर्तिताः–अ० पु० 'कीर्तित' श० प्र० ब० कृदन्तक्रि० ।
गुणाः–अ० पु० 'गुण' श० प्र० ब० कर्मपदम् ।
मुने–इ० पु० 'मुनि' श० सम्बो० ए० ।
वक्ष्यामि-अ०उ०वचनार्थक'ब्रू'धातोःकर्तरिलृट्०उ०ए०क्रि०
अहम्–द० पुं० 'अस्मद्'श० प्र० ए० कर्तृपदम् ।
बुध्वा–क्त्वाप्रत्ययान्तमव्ययम् ।
तैः–द० पुं० 'तद्' श० तृ० ब० युज्धातोः कर्तृपदम् ।
युक्तः–अ० पुं० 'युक्त' श० प्र० ए० कर्मविशेषणम् ।
श्रूयताम्–भ्वा०प०श्रवणार्थक'श्रु'धातोःकर्म०लोट्०प्र०ए०क्रि
नरः–अ० पु० 'नर' श० प्र० ए० कर्मपदम् ।

मुने हे वाल्मीकिऋषे त्वया भवता बहवः प्रचुराः दुर्लभाः च एव निश्चयेन दुष्प्रापाश्च ये वीर्यादयः गुणाः कीर्तिताः कथिताः, त्वया तैः वीर्यादिगुणैः युक्तः सम्पन्नः नरः पुरुषः श्रूयताम् । अहं बुध्वा विचार्य वक्ष्यामि कथयामि । कंचित्कालमुक्तगुणसम्पन्नः कोऽस्ति इति विचार्य स्मृत्वा च वक्तुमारेभे इति तात्पर्यम् ॥ ७ ॥

१ वर्तमानसामीप्येऽयं लृट् "वर्तमानसामीप्ये वर्तमानवद्वा" (पा० सू० ३–३–१३१) इति लडभावपक्षे बोध्यः ।

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान्धृतिमान्वशी ॥८

१वंश–वंशः संघेऽन्वये वेणौ पृष्ठमध्यास्थिनि स्मृतः । ना०
२प्रभव–प्रभवो जन्ममूले स्याज्जन्महेतौ पराक्रमे । ना०
३राम–रामो मृगविशेषे स्याज्जामदग्न्ये हलायुधे ।
राघवे ऽथासिते श्वेते मनोज्ञे च त्रिषु स्मृतः ॥ ना०
४नाम–सम्भाव्यकुत्साप्राकाश्यविकल्पस्मृतिविस्मये ।
कोपेऽभ्युपगमे नामाऽव्ययं, क्लीबं तु नाम्नि वै ना०
५जन–जनो लोकान्तरे लोके समूहे पामरेऽपि च । ना०
६श्रुत– श्रुतं शास्त्रावधृतयोर्युगपर्याप्तयोः कृतम् । ना०
७नियत–नियतस्त्रिषु संयुक्ते हिते नित्ये च संयते । ना०
८धृति–धृतिः स्त्री धारणे तुष्टौ धैर्ये योगे सुखेऽध्वरे । ना०
९वश–वशः प्रभुत्वे इच्छायां पराधीने तु वै त्रिषु । ना०

इक्ष्वाकु–कस्यचिद्राज्ञो नाम । आत्मन् ४–१ महत् ५–७
वीर्य २–८ द्युति ४–४ ।

इक्ष्वाकुवंशप्रभवः–अ० पु० 'इ–व' श० प्र० ए०
कर्तृविशेषणम् ।

रामः–अ० पु० 'राम' श० प्र० ए० कर्तृपदम् ।

नाम–स्मरणार्थकमव्ययम् ।

जनैः–अ० पुं० 'जन' श० तृ० व० श्रुधातोः कर्तृपदम्

श्रुतः—अ० पुं० 'श्रुत' श० प्र० ए० कर्तृविशेषणम्। नियतात्मा 'नियतात्मन्', महावीर्यः 'महावीर्य', द्युतिमान् अत्यन्तप्र० 'द्युतिमत्', धृतिमान् 'धृतिमत्', वशी 'वशिन्' श० प्र० ए० कर्तृविशेषणम्।

इक्ष्वाकुवंशप्रभवः इक्ष्वाकोः वैवस्वतमनुज्येष्ठपुत्रस्य वंशः अन्वयः पुत्रपौत्रादिपरम्परा इक्ष्वाकुवंशः (ष० त०), प्रभवति उत्पद्यते यस्मिन् स प्रभवः (कृ० वृ०) इक्ष्वाकुवंशः प्रभवः प्रादुर्भावस्थानं यस्य स इक्ष्वाकुवंशप्रभवः (ष० ब०) जनैः आपामरैर्लोकैः श्रुतः विदितः लोकप्रसिद्ध इत्यर्थः नियतात्मा नियतः संयतः वशीकृत इत्यर्थः आत्मा चित्तं येन स नियतात्मा (तृ० ब०) महावीर्यः महत् विपुलं वीर्यं प्रबलोत्साहः यस्य स महावीर्यः (ष० ब०) द्युतिमान् द्युतिः कान्तिः विद्यते यस्य स द्युतिमान् (त० वृ०) धृतिमान् धृतिः आनन्दः विद्यते यस्य सः धृतिमान् (त० वृ०) वशी वशः प्रभुत्वम् अस्ति यस्य स वशी सर्वस्वामी रामः रमन्ते योगिप्रभृति सर्वजना यस्मिन् स रामः (कृ०वृ०)भग-

---

१ रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।
इति रामपदेनाऽसौ परं ब्रह्माभिधीयते॥

इत्यगस्तिसंहितोक्तेः।

वत्सप्तमावतारभूतो रामनामकः पुरुषः अस्ति नाम ! ॥८॥

इतः प्रभृति अष्टादशश्लोकान्तमेकान्वयः ।

बुद्धिमान्नीतिमान्वाग्मीश्रीमान्शत्रुनिवर्हण
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥९

१बुद्धि—बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिः चित्संवित्प्रतिपद्ज्ञप्तिचेतनाः । धीः

२नीति—ओषःप्लोषे,नयोनीतौ,ज्यानिर्जीर्णे,भ्रमोभ्रमो

३वाग्मिन्—वाचोयुक्तिपटुर्वाग्मी, वावदूको ऽतिवक्तरि ॥

४श्रीमत्—श्रीमान् तिलकवृक्षे स्यात्,मनोज्ञे धनिके त्रिपु.

५शत्रु—रिपौ वैरिसपत्नाऽरिद्विषद्द्वेषणदुर्हृदः ।
द्विड्विपक्षाऽहिताऽमित्रदस्युशात्रवशत्रवः ॥
अभिघातिपराऽराति प्रत्यर्थिपरिपन्थिनः । क्ष०

६निवर्हण—प्रमापणं निवर्हणं निकारणं विशारणम् ।
प्रवासनं परासनं निषूदनं निहिंसनम् ।
निर्वासनं संज्ञपनं निर्ग्रन्थनमपासनम् ।
निस्तर्हणं निहननं क्षणनं परिवर्जनम् ॥

---

१ प्रेक्षा, उपलब्धि स्त्री० २ चिद्, संविद्–स्त्री० ।

३ वाग्मिन्—पु. न, ग्मिनी—स्त्री.

४ श्रीमत्–पु० न, श्रीमती–स्त्री० ५ रिपु–पु० ६ द्विषत्–पुं०

७ दुर्हृद् पुं० ८ द्विष्—पु० ९ शत्रु—पुं० १० प्रत्यर्थिन्, परिपन्थिन्–पुं०

निर्वापणं विशसनं मारणं प्रतिघातनम् ।
उद्वासनप्रमथनक्रथनोज्ज्वासनानि च ।[1]
आलम्भपिञ्जविशिरघातोन्माथवधा अपि ।[2] क्ष०
७अंस–स्कन्धो भुजाशिरोंऽसोऽस्त्री, सन्धी तस्यैव जत्रुणी। म०
८बाहु–भुजबाहू[3] प्रवेष्टो दोः[4] स्यात्, कफोणिस्तु कूर्परः। म०
९कम्बु–कम्बुर्ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ । ना०
१०ग्रीवा–कण्ठो गलोऽथ ग्रीवायां शिरोधिः कन्धरेत्यपि[5] ।
कम्बुग्रीवा त्रिरेखा सा ऽवटुर्घाटा कृकाटिका । म०
११हनुः–ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।
अधस्ताच्चिबुकं, गण्डौ कपोलौ, तत्परा हनुः । म०
विपुल ८–७ महत् ८–७ ।

बुद्धिमान् 'बुद्धिमत्', नीतिमान् 'नीतिमत्', वाग्मी 'वाग्मिन्', श्रीमान् 'श्रीमत्', शत्रुनिबर्हणः, विपुलांसः, महाबाहुः, कम्बुग्रीवः, महाहनुः–प्र०ए०कर्तृविशेषणम् । बुद्धिमान् बुद्धिः विद्यते यस्य स बुद्धिमान् ( त०वृ० )

---

१ उज्ज्वासन–न २ उन्माथ–पु० ३ बाहु–पु०
४ दोष्–पु० ५ कन्धरा–स्त्री०

६ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ अस्तिविवक्षायां सत्तार्थे ये मतुबादयस्ते भूमादिष्वर्थेषु भवन्ति । भूम्नि ( प्राचुर्ये ) यथा—गावः सन्ति यस्य स गोमान् ब्राह्मणः बहु-

'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहौ च विज्ञानं तत्त्वज्ञानं च धीगुणाः ।' इत्युक्तगुणयुक्तबुद्धिमान् नीतिमान् नीतिः लोकमर्यादा विद्यते यस्य स नीतिमान् ( त०वृ० ) वाग्मी वाक् विद्यते यस्य स वाग्मी (त०वृ०) युक्तिमद्भाषणकर्ता श्रीमान् श्रीः संपत्तिः विद्यते यस्य स श्रीमान् ( त०वृ० ) धनिकः शत्रुनिबर्हणः निबर्हति नाशयति स निबर्हणः (कृ०वृ०) शत्रूणां रिपूणां निबर्हणः शत्रुनिबर्हणः ( ष० त० ) विपुलांसः विपुलौ विशालौ अंसौ स्कन्धौ यस्य स विपुलांसः ( षं० ब० ) 'कक्षः कुक्षिश्च वक्षश्च घ्राणः स्कन्धो ललाटिका । सर्वभूतेषु निर्दिष्टा उन्नतास्तु सुखप्रदाः ॥' इति सामुद्रिकोक्तमहापुरुषलक्षणसम्पन्नः महाबाहुः महान्तौ विशालौ ( वृत्तपीनौ ) बाहू भुजौ यस्य स महाबाहुः( ष० ब० )कम्बुग्रीवः कम्बुरिव शङ्ख इव ग्रीवा कन्ध-

---

गोयुक्त इत्यर्थः । निन्दायां—ककुदावर्तः स्कन्धे रोम्णां भ्रमिविशेषो विद्यते यस्याः सा ककुदावर्तवती दुर्लक्षणा कन्येत्यर्थः । प्रशंसायां रूपवान् । नित्ययोगे–क्षीरवन्तो वृक्षाः । अतिशायने उदरवती कन्या । महोदरेत्यर्थः । सम्बन्धे–दण्डवान् पुरुषः । दण्डसम्बन्धयुक्तः पुरुष इत्यर्थः ।

१ "वाचोग्मिनिः"(पा०सू० ५-२-१२४)इति मत्वर्थप्रशंसायां ग्मिनिप्रत्यय

२ निपूर्वकबृहधातोः "नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" (पा० सू० ३-१-१३४ )इति ल्युट्, तस्य अनादेशः ।

रा यस्य स कम्बुग्रीवः ( ष० व० ) रेखात्रययुतग्रीवावा-
न् महाहनुः महती विशाला हनुः चिबुकाधोभागो यस्य
स महाहनुः ( ष० व० ) ॥ ९ ॥

महोरस्को महेष्वासो गूढजत्रुररिन्दमः ।
आजानुबाहुःसुशिराःसुललाटःसुविक्रमः १०

१उरस्–चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ।
उरो वत्सं च वक्षश्च पृष्ठन्तु चरमं तनोः । म०
२इष्वास–धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् ।
इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम् ॥
कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ । क्ष०
३गूढ–निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते । त्रि०
४दम–शास्तिशिष्टौदण्डयतिशिक्षयत्यपि दाम्यति। क्ष० क्रि०
५आ–आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।
आ प्रगृह्यः स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः ॥ ना०
६जानु–जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् । म०

---

१ उरस्—न, २ वक्षस्—न,
३ धनुष्—न, चाप—पुं, ४ धन्वन्–न,
५ शासु अनुशिष्टौ–अ० प० ६ दण्ड दण्डनिपातने—चु० उ०
७ शिक्ष विद्योपादाने–भ्वा० आ० हेतुमण्णिच्० ८ दमु उपशमे–दि० प०

७सु—पूजातिशययोः स्वति । ना॰
८शिरस्—उत्तमाङ्गं शिरः[2]शीर्षं मूर्धा[3] ना,मस्तकोऽस्त्रियाम्॥
९ललाट—ललाटमलिकं[4] गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ[5] स्त्रियौ॥
१०विक्रम—विक्रमः पादविक्षेपे विष्णौ शौर्याधिके स्थितौ॥ना॰
महत् ५—७ जत्रु ९—७ अरि ९—५ बाहु ९—८ महो-
रस्कः, महेष्वासः, गूढजत्रुः, अरिन्दमः, आजानु-
बाहुः, सुशिराः 'सुशिरस्', सुलाटः, सुविक्रमः, प्र॰
ए॰ कर्तृविशेषणम् ।

महोरस्कः महद् विशालम् उरः वक्षस्थलं य-
स्य स महोरस्कः ( ष॰ ब॰ ) महेष्वासः इषवः
वाणाः अस्यन्ते क्षिप्यन्ते अनेन स इष्वासः ( उ॰त॰ )
महान् इष्वासः धनुः यस्य स महेष्वासः ( ष॰ ब॰ )
गूढजत्रुः गूढे गुप्ते मांसलत्वेनाप्रकाशे जत्रुणी स्कन्धद्वयस-
न्धिगतास्थिनी यस्य स गूढजत्रुः ( ष॰ ब॰ ) अरिन्दमः
दाम्यति दण्डयति स दमः[6] (कृ॰वृ॰)अरीणां शत्रूणान्दमः
अरिन्दमः(ष॰त॰)शत्रुविनेता आजानुबाहुः जानुनी अ-
भिव्याप्य इति आजानु ( अव्य॰ ) आजानु जानुपर्यन्तं

---

१ सु, अति—अव्यये । २ शिरस्-न, ३ मूर्धन्-पुं॰
४ अलिक—न॰ ५ भ्रू—स्त्री॰
६ पचाद्यच् कर्तरि ।

बाहू भुजौ यस्य स आजानुबाहुः ( ष० ब० ) सुशिराः शोभनं शिरः मस्तकं यस्य स सुशिराः ( ष० ब० ) सुललाटः सुष्ठु उन्नतं विस्तीर्णं च ललाटं यस्य स सुललाटः (ष० ब०) सुविक्रमः शोभनः विक्रमः पादविक्षेपो यस्य स सुविक्रमः (ष० ब०) ॥ १० ॥

**समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् ।**
**पीनवक्षा विशालाक्षो लक्ष्मीवान् शुभलक्षणः ॥ ११ ॥**

१सम–वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक् ।
साधारणः समानश्च, स्युरुत्तरपदे त्वमी ॥
निभसंकाशनीकाशप्रतीकाशोपमादयः ॥ शू०
२विभक्त–विभक्तःकार्तिकेये स्याद् विभिन्ने तु त्रिषु स्मृतः।ना०
३अङ्ग–अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।
गात्रं वपुः[3] संहननं शरीरं वर्ष्म[4] विग्रहः ॥
कायो देहः क्लीवपुंसोः, स्त्रियां मूर्तिस्तनुस्तनूः । म०
४स्निग्ध–चिक्कणं मसृणं स्निग्धं, तुल्ये भावितवासिते । वै०
५वर्ण–वर्णो द्विजादिशुक्लादियशोगुणकथासु च ।
स्तुतौ ना, न स्त्रियां भेदरूपाक्षरविलेपने ॥ ना०

१ सदृश–पुं, न,–शी स्त्री०  २ सदृश्–त्रि० ।
३ वपुष् न०  ४ वर्ष्मन्—न०

६प्रताप—स प्रतापः प्रभावश्च यत् तेजः कोशदण्डजम् ।
७अक्षि—लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।
दृग् दृष्टिश्चाऽस्नु नेत्राम्बु रोदनं चाऽस्रमश्रु च ॥
८लक्ष्मी—शोभासम्पत्तिपद्मासु लक्ष्मीःश्रीरपि दृश्यते ।
९शुभ—श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम् ।
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् ।
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च ॥ का०
१०लक्षण—कलङ्काङ्कौलाञ्छनंचचिन्हंलक्ष्मचलक्षणम्
पीन ५—७ वक्षस् १०—१ विशाल ५—७

समः, समविभक्ताङ्गः, स्निग्धवर्णः, प्रतापवा[न्] अत्वन्तप्रत्ययान्त पुं० 'प्रतापवत्', पीनवक्षाः 'पीनवक्षस्' विशालाक्षः, लक्ष्मीवान् अत्वन्तप्र० 'लक्ष्मीवत्' शुभलक्षणः प्र०ए०कर्तृविशेषणम् ।

समः शत्रुमित्रेषु सदृशः समविभक्ताङ्गः समा[नि] न्यूनाधिकपरिमाणरहितानि च तानि विभक्तानि अश्लि[ष्टा]नि च—क्तानि(वि०उभ०क०)समविभक्तानि अङ्गानि कर[च]रणाद्यवयवा यस्य स समविभक्ताङ्गः ( ष० ब० ) स्नि[ग्]ग्धवर्णः स्निग्धः चिक्कणः ( प्रकाशमान् इत्यर्थः ) व[र्णः] श्यामरूपं यस्य स स्निग्धवर्णः ( ष० ब० ) प्रता[प]

१ ईक्षण—न०    २ चक्षुष्—न, अक्षि—न०    ३ लक्ष्मन—न,

वान् प्रतापः कोशदण्डजतेजः विद्यते यस्य स प्रतापवान् ( त० वृ० ) पीनवक्षाः पीनं पुष्टं वक्षः भुजान्तरं यस्य स पीनवक्षाः ( ष० व० ) विशालाक्षः विशाले कर्णपर्यन्तं विस्तीर्णे अक्षिणी नेत्रे यस्य स विशालाक्षः (ष० व०) लक्ष्मीवान् लक्ष्मीः सीतारूपधारिणी लक्ष्मीः विद्यते यस्य स लक्ष्मीवान्[1] ( त० वृ० ) शुभलक्षणः शुभानि कल्याणसूचकानि लक्षणानि श्रीवत्सादिचिह्नानि यस्य स शुभलक्षणः (ष० व०) ॥ ११ ॥

**धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः ।**
**यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान् १२**

सन्धा–सन्धा प्रतिज्ञा मर्यादा, श्रद्धा सम्प्रत्ययः स्पृहा। ना०
प्रजा–समे क्ष्मांशे रणेऽप्याजिः[2], प्रजा स्यात्सन्ततौ जने। ना०
यशस्–यशः कीर्तिः समज्ञा च स्तवः स्तोत्रं स्तुतिर्नुतिः। श०
ज्ञान–मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः । धी०
संपन्न–समृद्धे साधिते युक्ते संपन्नस्त्रिषु कीर्तितः । ना०
शुचि–शुचिर्ग्रीष्माग्निशृङ्गारेष्वाषाढे शुद्धमन्त्रिणि ।

---

१ "तदस्यास्त्यस्मिन्निति मतुप्" ( पा० सू० ५—२—९४ ) इति मतुप्, मस्य च "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" ( पा० सू० ८–२–९ ) इति वकारादेशः । २ आजि— श्री० ।

ज्येष्ठे च पुंसि, धवले शुद्धेऽनुपहते त्रिपु । ना०

७वश्य– विधेयो विनयग्राही[1] वचनेस्थित आश्रवः ।
वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः । वि०

८समाधि–ध्यानकारणसामग्रीयोगालङ्कारवाचिनः ।
स्युः समर्थननीवाकनियताश्च समाधयः[2] । ना०

धर्म २–९ ज्ञा २–१० सत्य २–१२ च २–
हित ३–५ रत १–३ ।

धर्मज्ञः, सत्यसन्धः, प्र० ए० कर्तृविशेषणम् ।
च–समुच्चयार्थकमव्ययम् । एवमग्रे ।
प्रजानाम्-आवन्त स्त्री० 'प्रजा' श० ष० ब० सम्बन्धबोधक
हिते–अ० न० 'हित' श० स० ए० वैषयिकाधिकरणम्
रतः, यशस्वी इन्नन्त० 'यशस्विन्', ज्ञानसम्पन्नः, शुचि
वश्यः, समाधिमान् अत्वन्तप्र० 'समाधिमत्' श० प्र
ए० कर्तृविशेषणम् ।

धर्मज्ञः सत्यसन्धः सत्या संकटेष्वपि न च्युता सन्ध
प्रतिज्ञा यस्य स सत्यसन्धः ( ष० ब० ) च प्रजा
लोकानां हिते इष्टसाधने रतः तत्परः च यशस्वी य
आश्रितरक्षणादिरूपा कीर्तिः विद्यते यस्य स यश

---

१ विनयग्राहिन्—पुं० न०—हिणी स्त्री० २ समाधि पुं०

( त० वृ० ) ज्ञानसंपन्नः ज्ञानेन मोक्षविषयकेण सम्पन्नः युक्तः ज्ञानसम्पन्नः ( तृ० त० ) शुचिः "शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा। मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिस्तथान्तरम्" इत्युक्तोभयशुद्धियुक्तः वश्यः पितृवचनेस्थितः समाधिमान् समाधिः आश्रितरक्षानियमः विद्यते यस्य स समाधिमान् (त०वृ०) ॥१२॥

प्रजापतिसमः श्रीमान् धाता रिपुनिषूदनः।
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥१३॥

१प्रजापति—ब्रह्माऽऽत्मभूः सुरज्येष्ठः परमेष्ठी पितामहः।
हिरण्यगर्भो लोकेशः स्वयंभूश्चतुराननः।
धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः।
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड् विधिः।
नाभिजन्माऽण्डजः पूर्वोऽनिधनः कमलोद्भवः।
सदानन्दो रजोमूर्तिः सत्यको हंसवाहनः। स्व०

२धातृ भृगुपुत्रे महादेवे मुकुन्दब्रह्मपुत्रयोः।
ब्रह्मदेवे पुमान् धाता, नाथे तु त्रिषु धारके। ना०

---

१ ब्रह्मन्—पुं०    २ परमेष्ठिन्—पुं०।
३ चतुरानन—पुं०    ४ धातृ—पुं० न,-त्री-त्री।
५ स्रष्ट-पु०    ६ वेधस्-पु०
७ विधातृ-पु०    ८ विश्वसृज्-पु०    ९ नाभिजन्मन्-पु०

३रक्षितृ–इभ्य आढ्यो धनी[1] स्वामी[2] त्वीश्वरः[3] पतिरीशि[4]
अधिभूर्नायको[5] नेता[6] प्रभुः परिवृढो ऽधिपः ।
अर्येन्द्रेशा[7] रक्षिता[8] च भर्ता[9] नाथ इनो विभुः ।
४जीव–जीवः प्राणिमहानिम्बकर्णाङ्गिरसाविष्णुषु ।
पुरुषे, जीवने तु स्यादस्त्रियां, जीवति त्रिषु ।
सम ११-१ श्री ११-८ रिपु ९-५ निषूदन९-
लोक २–५ धर्म२-९ परि १–१०

प्रजापतिसमः, श्रीमान् अत्वन्तप्रत्ययान्तपुं० 'श्रीम
धाता ऋ० पु० 'धातृ' रिपुनिषूदनः, रक्षि
ऋ० पुं० 'रक्षितृ' श० प्र० ए० कर्तृविशेषणम्
जीवलोकस्य, धर्मस्य अ० पुं० ष० ए० सम्बन्धबो
धकम् ।

परिरक्षिता ऋ० पुं० 'परिरक्षितृ' श० प्र० ए० कर्तृविशेषण
प्रजापतिसमः–प्रजापतिना ब्रह्मदेवेन समः तुल्यः प्रजा
पतिसमः ( तृ० त० ) कर्तुमकर्तुमन्यथाकर्तुं समर्थ इत्य

---

१ धनिन् पु० न०–नी–स्त्री०
२ स्वामिन्–पु०न०–नी–स्त्री० ३ ईश्वर पुं, न, –रा स्त्री०
४ ईशितृ–पु०न०–त्री स्त्री० ५ नायक–पु०–न०–यिका–स्त्री०
६ नेतृ–पुं० न०–त्री–स्त्री० ७ अर्य इन्द्र ईश पुं, न,–आ स्त्री०
८ रक्षितृ—त्री ९ भर्तृ–त्री

र्थः श्रीमान् श्रीः अखण्डितैश्वर्यं विद्यते यस्य स श्रीमान् ( त० वृ० ) धाता दधाति सर्वान् पालयति स धाता ( कृ० वृ० ) रिपुनिषूदनः निषूदयति नाशयति स निषूदनः ( कृ० वृ० ) रिपूणां शत्रूणां निषूदनः नाशकः रिपुनिषूदनः ( ष० त० ) जीवलोकस्य जीवानां प्राणिनां लोकः भुवनं जीवलोकः ( ष० त० ) तस्य जीवलोकस्य भूलोकस्य रक्षिता पालकः धर्मस्य वर्णाश्रमधर्मस्य परिरक्षिता परितः समन्ततः रक्षिता परिरक्षिता (प्र०त०) आचारप्रचारणाभ्यां व्यवस्थापयितेत्यर्थः ॥१३॥

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
वेदवेदाङ्गतत्वज्ञो धनुर्वेदे च निष्ठितः ॥१४॥

१.स्व–स्वो ज्ञातावात्मनि स्वं,त्रिष्वात्मीयेस्वोऽस्त्रियांधने ।ना०
२स्वजन--सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः।म०
३वेद–श्रुतिः स्त्री वेद आम्नायस्त्रयी, धर्मस्तु तद्विधिः।श०
४वेदाङ्ग–शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दोविचितिरित्येष षडङ्गो वेद उच्यते ॥ श०
५तत्त्व–तत्त्वमात्मनि याथार्थ्ये स्वरूपे वस्तुचेतसोः । ना०
६स्था–स्थितौ तिष्ठत्याशयस्य ख्यापने त्ववलम्बने ।
निर्णयार्थे तिष्ठतेऽथ मृतौ सन्तिष्ठते स्मृतः ॥

१ आम्नाय-पु० त्रयी–स्त्री० २ ष्ठा गतिनिवृत्तौ भ्वा० ग० प० तिष्ठति ।

उत्थाने तूत्तिष्ठति च यत्र उत्तिष्ठते स्मृतः ।
अथोपतिष्ठते मैत्रीपूजासङ्गमनेषु च ॥
लिप्सया गमने तु स्यादुपतिष्ठति च द्वयोः ।
अधितिष्ठति चारोहे, देशयाने प्रतिष्ठते ॥
अनुतिष्ठत्यनुष्ठाने, प्रतितिष्ठति तु स्मृतः ।
प्रतिष्ठायां, प्रतिज्ञायामातिष्ठत उदीरितः ॥
अविशेषार्थकावेतौ नित्यमात्मन ईरितौ ।
वितिष्ठते चाऽवतिष्ठते चायं प्रथमे गणे ॥ ना० क्रि०
रक्षितृ १३–३ धर्म २–९ च २–७ ज्ञा २–१०ध-
नुष् १०–२ ।

रक्षिता–ऋ०पु०'रक्षितृ'श०प्र०ए०कर्तृविशेषणम् । एवमग्रे
स्वस्य–अ० पु० 'स्व' श० ष० ए० रक्षधातोः कर्मवि०
धर्मस्य–अ० पु० 'धर्म' श० ष०ए० रक्षधातोः कर्म ।
स्वजनस्य–अ० पु० 'स्वजन' श० ष० ए० रक्षधातोः कर्म।
च–समुच्चयार्थकमव्ययम् । एवमग्रे । रक्षिता ।
वेदवेदाङ्गतत्त्वज्ञः–अ०पु०'वे०–ज्ञ'श०प्र०ए०कर्तृवि०
धनुर्वेदे–अ०पु०'धनुर्वेद'श०स०ए०वैषयिकाधिकरणम्।
निष्ठितः–अ० पु० 'निष्ठित' श० प्र० ए० कर्तृविशेषणम्।
स्वस्य स्वकीयस्य धर्मस्य क्षात्रधर्मस्य रक्षिता पालकः
स्वजनस्य स्वस्य आत्मनः जनः ज्ञातिबन्धिवादिः स्व-

जनः ( ष० त० ) तस्य स्वजनस्य च रक्षिता वेदवेदाङ्गतत्त्वज्ञः विद्यते ज्ञायते धर्मोऽनेन स वेदः ( कृ० वृ० ) वेदस्य अङ्गानि शिक्षादीनि वेदाङ्गानि ( ष० त० ) वेदः ऋग्यजुःसामाथर्वात्मकः च वेदाङ्गानि च वेदवेदाङ्गानि ( इ० द्व० ) वेदवेदाङ्गानां तत्त्वं याथार्थ्यं वेदवेदाङ्गतत्त्वं ( ष० त० ) वेदवेदाङ्गतत्त्वं जानाति स वेदवेदाङ्गतत्त्वज्ञः ( उ० त० ) धनुर्वेदे धनुरादिशस्त्रास्त्रप्रतिपादके वेदे च—

'आयुर्वेदो धनुर्वेदो वेदो गान्धर्व एव च ।
अर्थशास्त्रमिति प्रोक्तमुपवेदचतुष्टयम् ॥'

इत्युक्तायुराद्युपवेदान्तरे निष्ठितः निपुणः ॥ १४ ॥

**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् ।**
**सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५ ॥**

१शास्त्र–निदेशग्रन्थयोःशास्त्रं, शस्त्रमायुधलोहयोः । ना०

२अर्थ–अर्थः प्रयोजने वाच्ये प्रकारद्रव्यवस्तुषु ।
हेतौ निवृत्तौ विषये याच्ञायां च प्रकीर्तितः ॥ ना०

३स्मृति–चिन्ता तु स्मृतिराध्यानं स्मरणं, सस्पृहे पुनः ।
उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि ॥ धी०

४प्रतिभा–प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता । धी०

५साधु–साधु त्रिषूचिते सौम्ये, सज्जने वार्धुषौ पुमान् । ना०

---

१ उत्कण्ठा–स्त्री० उत्कलिका–स्त्री. २अभिध्या–स्त्री.

६दीन—दरिद्रे दुःखिते भीते त्रिषु दीनं तु तागरे । नाः
सर्व ३-३. तत्त्व १४-५. ज्ञा २-१०. लोक २-५
प्रिय ३-९ नञ् ४-५ आत्मन् ४-१. चक्ष ६-६

सर्वशास्त्रार्थतत्त्वज्ञः 'स०—ज्ञ' श० स्मृतिमान् 'स्मृतिमत्' श० प्रतिभानवान् 'प्र०—वत्' श० सर्वलोकप्रियः 'सर्व०—य' श० साधुः 'साधु' श० अदीनात्मा 'अदीनात्मन्' श० विचक्षणः 'विचक्षण' श० प्र० ए० कर्तृविशेषणम् ।

सर्वशास्त्रार्थतत्त्वज्ञः सर्वाणि सम्पूर्णानि च तानि शास्त्राणि न्यायादीनि च—स्त्राणि ( वि० पू० क० )—स्त्राणाम् अर्थाः विषयाः—र्थाः ( ष० त० )—र्थानां तत्त्वं गूढाभिप्रायः—त्त्वं( ष० त० )—त्त्वं जानाति स—ज्ञः ( उ० त० ) स्मृतिमान् स्मृतिः स्मरणम् अस्ति यस्य स स्मृतिमान् (त०वृ०) ज्ञातार्थविषये लेशतोऽपि विस्मरणशून्यः प्रतिभानवान् प्रतिभानं व्यवहारकाले नूतनकल्पनानां झटितिस्फुरणम् अस्ति यस्य स—वान् ( त ०वृ ०) सर्वलोकप्रियः सर्वे सम्पूर्णाः च ते लोकाः जनाः च—काः ( वि० पू० क० ) —कानां प्रियः अभीष्टः—यः ( ष० त० ) साधुः साध्नोति परकार्यं स साधुः ( कृ० वृ० ) परोपकारी अदीनात्मा न दीनः भीतः अदीनः ( न०त० )—नः आत्मा

चित्तं यस्य स–त्मा ( ष० ब० ) विचक्षणः विविधं चष्टे वक्ति स विचक्षणः ( कृ० वृ० ) पाण्डितः ॥ १५ ॥

सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः।
आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः ॥ १६ ॥

१सर्वदा–तदा तदानीं युगपदेकदा सर्वदा सदा । अ०

२गम्–गतौ गच्छति, बोधे चाऽवगच्छत्यधिगच्छति ।
अभिगच्छति साम्मुख्ये, उदये तु प्रकीर्तितः ॥
उद्गच्छतीत्यनुगतौ तथानुऽकरणेऽपि च ।
अनुगच्छत्यथ बहिर्याने निर्गच्छतीति च ॥
आगच्छतीत्यागमने, मतावभ्युपगच्छति ।
संगच्छते संगमे,ऽथ समीप उपगच्छति ॥
शिक्षणे चाऽऽगमयतीत्यात्मने तु प्रतीक्षणे ॥ ना० क्रि०

३सत्–सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत् । ना०

४समुद्र–समुद्रो ऽब्धिरकूपारः पारावारः सरित्पतिः ।
उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥
रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ॥   वा०

५इव–इवोत्प्रेक्षे च सादृश्ये निश्चये वाक्यभूषणे ।   ना०

६सिन्धु–देशे नदे मदे ऽब्धौ च सिन्धुर्ना,सरिति स्त्रियाम् । ना०

---

१ युगपत्–अ० एकदा–अ०   २ सत्–पु, न, सती–स्त्री.

३उदन्वत्–पु० उदधि–पु.   ४सरस्वत्–पु.   ५इव–अ.

७आर्य–महाकुलकुलीनाऽऽर्यसभ्यसज्जनसाधवः[1]।
सर्व३–३सम११–१–च२ ७एव७–३सदा
१६–१एक३–८प्रिय३–९दश्३–१०

सर्वदा–आधारशक्तिप्रधानकालार्थकमव्ययम्। एवं सदा।
अभिगतः–अ०पु०'अभिगत'श०प्र०ए०कर्तृविशेषणम्।
सद्भिः–त०पु०'सत्'श०तृ०ब०गमधातोः कर्तृबोधकम्।
समुद्रः–अ०पु०'समुद्र'श०प्र०ए०उपमानम्।
इव–उपमार्थकमव्ययम्।
सिन्धुभिः–उ० स्त्री० 'सिन्धु' श० तृ० ब० उपमान गतगमधातोः कर्तृबोधकम्।
आर्यः, सर्वसमः अ० पु० 'आर्य''सर्वसम' श० प्र० ए० कर्तृवि०।
च, एव पादपूरणार्थकं, निश्चयार्थकमव्ययम्। सदा।
एकप्रियदर्शनः–अ०पु०'ए०–न'श०प्र०ए०कर्तृवि०।

सिन्धुभिः नदीभिःअभिगतः संमीलितः समुद्रःसागर इव सर्वदा सर्वस्मिन् काले सद्भिः सज्जनैः अभिगतः परिवारितः आर्यः अर्तुम् अभिगन्तुं योग्यः आर्यः[2] (कु० वृ० श्रेष्ठः सर्वसमः सर्वेषु शत्रुमित्रोदासीनेषु समः तुल्यः सर्व

---

१ साधु–पुं.

२ ऋधातोः "ऋहलोर्ण्यत्" (पा० सू० ३–१–१२४) इति अर्हेऽर्थे ण्यत्प्रत्यय

समः ( स० त० ) सदा निरन्तरम् एकप्रियदर्शनः एकं केवलं च तत् प्रियं हृद्यं च—यं ( वि०पू०क० )—यं दर्शनं शरीरं यस्य स—नः सुस्वरूप इत्यर्थः ॥ १६ ॥

**स च सर्वगुणोपेतः कौसल्यानन्दवर्द्धनः ।**
**समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥१७॥**

[१]इ—गतावेत्ययति प्रोक्तौ परैति तु मृतौ मतः ।
अपैत्यपसृतौ, योगे ऽनुगतौ चापि कीर्तितः ॥
अन्वेत्यवैति तु ज्ञानेऽथ निरेति च निर्गमे ।
अथाऽभ्येति च साम्मुख्ये, व्यये व्येति प्रकीर्तितः ॥
सत्यालीकविचारे तु ज्ञानविश्वासयोस्तथा ।
प्रत्येत्यथ विपर्येति विपर्यय उदीरितः ॥
व्याप्तिपर्याययोः ख्यातः पर्येति, प्रत्यवैति तु ।
पापे ऽभ्युपैति तु ख्यातोऽङ्गीकारे हि मनीषिभिः ॥
समवैति समावेशे, समीपगतियोगयोः ।
उपैति, व्यतिक्रमे तु स्यादत्येति, स्वाशयस्य च ॥
प्रकाशने त्वभिप्रैति, उदेत्युदयति स्मृतौ ।
ऊर्ध्वगत्यां प्रकाशेऽथ निर्गमे निरयत्यपि ॥
विघ्ने ऽन्तरयति प्रोक्तो निरासे दुरयत्यथ ।

---

१ इण् गतौ अ० प० एति, इ गतौ भ्वा० प० अयति ।

स्मरणेऽध्येत्यधीते तु स्वाध्याये इण् इक् इङाम् ॥ ना.

२आनन्द–मुत् प्रीतिः प्रमदो हर्षः प्रमोदाऽऽमोदसंमद

स्यादानन्दथुरानन्दः शर्मशातसुखानि च ॥ का०

३वृध–वृद्धिच्छेदनयोर्ज्ञेयः प्रथमे वर्धते तथा ।

दशमे वर्धयति तु दीप्तिभाषणयोर्द्वयोः ॥ ना० क्रि०

४गम्भीर–त्रिष्वागाधात् प्रसन्नोऽच्छःकलुषोऽनच्छआवि

निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ॥

अगाधमतलस्पर्शे, कैवर्ते दासधीवरौ ॥

५धैर्य–स्थिरचित्तोन्नतिर्या तु तद् धैर्यमिति गीयते । ना०

६हिमवत्–हिमवान्निषधो विन्ध्यो माल्यवान् परियात्र

गन्धमादनमन्ये च हेमकूटादयो नगाः ॥

तद् २–३ च २–७ सर्व ३–२ गुण २–६ कौसल्या

शरथपत्न्या नाम । समुद्र १६–४ इव १६–८

सः–द० पु० 'तद्' श० प्र० ए० कर्तृविशेषणम् ।

च–पादपूरणार्थकमव्ययम् ।

सर्वगुणोपेतः, कौसल्यानन्दवर्धनः प्र० ए० कर्तृवि

समुद्रः–अ० पुं० 'समुद्र' श० प्र० ए० उपमानम् ।

---

१ इक् स्मरणे अ० प० नित्यमधिपूर्वः, अध्येति ।

२ इङ् अध्ययने अ० आ० नित्यमधिपूर्वः अधीते.

३ मुद्—स्त्री. ४ शर्मन्—न. ५ वृधु वृद्धौ भ्वा० आ०

६ वृधु भाषार्थः चु० उ० ७ हिमवत्—पु० ८ माल्यवत्—पु०

इव –उपमार्थकमव्ययम् ।

गाम्भीर्ये–अ० न० 'गाम्भीर्य' श०स०ए० वैषयिकाधि०

धैर्येण–अ० न० 'धैर्य' श० तृ० ए० उपपदतृतीयान्तम् ।

हिमवान्–अत्वन्तप्र० पु० 'हिमवत्' श० प्र० ए० उपमानम् । इव ।

सःपूर्वोक्तः सर्वगुणोपेतः सर्वे सम्पूर्णाश्च ते गुणाः दयादाक्षिण्यादयः च सर्वगुणाः ( वि० पू० क० ) सर्वगुणैः उपेतः युक्तः–पेतः( तृ० त० )कौसल्यानन्दवर्धनः कोसलस्य राज्ञः अपत्यं स्त्री कौसल्या ( त० वृ० ) कौसल्यायाः दशरथभार्यायाः आनन्दः हर्षः–नन्दः ( ष०त० ) वर्धयति स वर्धनः ( कृ० वृ० ) –नन्दस्य वर्धनः–र्धनः ( ष० त० ) गाम्भीर्ये गम्भीरस्य ज्ञातुमशक्यान्तर्गततत्त्वस्य भावः धर्मः गाम्भीर्यं ( त० वृ० ) तस्मिन् गाम्भीर्ये समुद्रः सागरः इव धैर्येण कष्टेऽपि स्थैर्येण हिमवान् हिमाचल इव ॥ १७ ॥

**विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः ।**
**कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥**

---

१ "वृद्धेत्कोसलाजादाञ्ञ्यङ्" ( पा० सू० ४-१-१७१ ) इति ञ्यङ्, ङकार इत् ।

२ "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( पा० सू० ५-१-१२४ ) इति ष्यञ् भावार्थे, षकार इत् ।

धनदेन समस्त्यागे सत्ये धर्म इवापरः ॥१८॥

१विष्णु–विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः[१]।
दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥
दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः।
पीताम्बरोऽच्युतः शार्ङ्गी[२] विष्वक्सेनो जनार्दनः॥
उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः।
पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः॥
देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः।
वनमाली[३] बलिध्वंसी[४] कंसारातिरधोक्षजः॥
विश्वम्भरः कैटभजिद्[५] विधुः श्रीवत्सलाञ्छनः।
पुराणपुरुषो यज्ञपुरुषो नरकान्तकः॥
जलशायी[६] विश्वरूपो मुकुन्दो मुरमर्दनः।

२सोम–हिमांशुश्चन्द्रमाश्चन्द्र[७] इन्दुः कुमुदबान्धवः।
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः॥
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः।
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः॥ दि०

३दर्शन–निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्।

१ विष्टरश्रवस्–पुं० २ शार्ङ्गिन्–पुं० ३ वनमालिन्–पुं०
४ बलिध्वंसिन्–पुं० ५ कैटभजित्–पुं०
६ जलशायिन्–पुं० ७ चन्द्रमस्–पुं०

काल-कालो मृत्यौ महाकाले समये यमकृष्णयोः । ना०
अग्नि-अग्निर्वैश्वानरो वह्निः वीतिहोत्रो धनञ्जयः ।
कृपीटयोनिर्ज्वलनो जातवेदा[1]स्तनूनपात् ॥
बर्हिः[2]शुष्मा कृष्णवर्त्मा[3] शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावको ऽनलः ॥
रोहिताश्वो वायुसखः शिखावाना[4]शुशुक्षणिः ।
हिरण्यरेता[5] हुतभुग्[6] दहनो हव्यवाहनः ॥
सप्तार्चिर्दमुनाः[7] शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्वस्तु[8] वाडवो वड़वानलः ॥ स्व०
क्षमा-क्षितिक्षान्त्योः क्षमा, युक्ते क्षमं शक्ते हिते त्रिषु । ना०
पृथिवी-भूर्भूमिरचला ऽनन्ता रसा विश्वम्भरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥
सर्वंसहा वसुमती वसुधोर्वी[9] वसुन्धरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मा ऽवनिर्मेदिनी मही ॥
विपुला गह्वरी धात्री गौरिला[10] कुम्भिनी क्षमा ।
भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥ भू०
धनद-कुबेरस्त्र्यम्बकसखो यक्षराड्[11] गुह्यकेश्वरः ।

---

१ जातवेदस्-पुं. २ बर्हिःशुष्मन्, बर्हिष्, शुष्मन्-पुं० ३ कृष्णवर्त्मन्-पुं०
४ शिखावत, आशुशुक्षणि-पु. ५ हिरण्यरेतस्-पुं० ६ हुतभुज्-पुं.
७ सप्तार्चिष्-दमुनस्-पुं. ८ अप्पित्त-पुं. ९ वसुधा, उर्वी-स्त्री.
१० गो, इला-स्त्री. ११ यक्षराज्-पुं.

मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥
किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलबिलश्रीदपुण्यजनेश्वराः ॥
८त्याग–त्यागो विहापितं दानमुत्सर्जनविसर्जने ।
विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥
प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥

सदृश ११–१ वीर्य २–८ प्रिय ३–९ क्रोध ४–३
म ११–१ धर्म २–९ इव १६–५ न ४–७ पर ५-

विष्णुना–उ०पु० 'विष्णु'श०तृ०ए० ३उपपदतृतीयान्त
सदृशः–अ० पु० 'सदृश' श०प्र०ए० कर्तृविशेषण
वीर्ये–अ०न० 'वीर्य'श०स०ए०वैषयिकाधिकरणम् ।
सोमवत्प्रियदर्शनः, कालाग्निसदृशः प्र०ए०कर्तृवि०
क्रोधे–अ०पु० 'क्रोध' श०स०ए० वैषयिकाधिकरण
क्षमया–आ०स्त्री० 'क्षमा' श०तृ०ए० उपपदतृतीयान्त
पृथिवीसमः–अ०पु० 'पृथिवीसम' श०प्र०ए०कर्तृवि०
धनदेन–अ०पु० 'धनद' श०तृ०ए० उपपदतृतीयान्त
समः–अ० पु० 'सम' श० प्र० ए० कर्तृविशेषणम् ।
त्यागे–अ०पु० सत्ये अ०न०स०ए० वैषयिकाधिकरण

---

१ मनुष्यधर्मन्–पुं. २ यक्ष, एकपिङ्ग, ऐलाबिल–पुं.

३. "तुल्यार्थैरतुलोपमाभ्यां तृतीया च" (पा० सू० २–३–७२ ) इति तृती

धर्मः-अ० पु० 'धर्म' श० प्र० ए० उपमानम्।
इव-उपमार्थकमव्ययम्।
अपरः-अ० पु० 'अपर' श० प्र० ए० उपमानविशे०

वीर्ये सामर्थ्ये विष्णुना नारायणेन सदृशः तुल्यः सोमवत्प्रियदर्शनः सोमेन चन्द्रेण तुल्यं सोमवत्[१] (त० वृ०) सोमवत् च तत् प्रियम् आनन्दोत्पादकत्वेन सर्वाभीष्टं च सो० -यं (वि० उभ० क०) सो०-यं दर्शनम् अवलोकनं यस्य सः० सो०-नः (ष० ब०) क्रोधे कोपविषये कालाग्निसदृशः काले प्रलयकाले उत्थितः अग्निः वह्निः कालाग्निः[२] (म० लो० क०) कालाग्निना सदृशः तुल्यः का०-शः (तृ० त०) क्षमया तितिक्षया पृथिवीसमः पृथिव्या समः तुल्यः पृ०—मः (तृ० त०) त्यागे दाने धनदेन धनं द्रव्यं ददाति सः धनदः (उप० त०) तेन धनदेन समः तुल्यः सत्ये सत्यभाषणे अपरः न परः श्रेष्ठः यस्मात् सः अपरः (पं० ब०) सर्वश्रेष्ठः धर्मः धर्मराज इव ॥ १८ ॥

**तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् ।**
**ज्येष्ठं ज्येष्ठगुणैर्युक्तं प्रियं दशरथः सुतम् ॥**

---

१ "तेन तुल्यं क्रिया चेद्वतिः" (पा० सू० ५-१-११५) इति वतिः प्रत्ययः।
२ "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" (का० वा०) इति उत्थितपदस्य लोपः।

प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया।
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः॥

१पराक्रम—इच्छामनोभवौ कामौ शौर्योद्योगौ पराक्रमौ।ना
२ज्येष्ठ—ज्येष्ठो मासे, त्रिषु श्रेष्ठे ऽतिवृद्धे ऽप्यग्रजेऽपि च।अ
३दशन्—एकं दश शतं चैव सहस्रमयुतं तथा।
लक्षं च नियुतं चैव कोटिरर्बुदमेव च॥
वृन्दं खर्वो निखर्वश्च शङ्खं पद्मश्च सागरः।
अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथाक्रमम्॥ सं
४रथ—याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः। क्ष
५सुत—सुतः पुत्रे पार्थिवे ऽप्यसुत्पन्ने तु त्रिषु स्मृतः। ना
६प्रकृति—स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च॥ क्ष०
७युवराज—भगिनीपतिरावुत्तो, भावो विद्वानथाऽऽवुकः।
जनको, युवराजस्तु कुमारो भर्तृदारकः॥ नाट्य०

तद् २–३–एवं ५–१० गुण २–६ सम्पन्न १२–५
राम ८–३ सत्य २–१२ युज् ३–२ प्रिय ३–९
हित ३–५ इष् ५–१ प्रीति १७–२ मही १८–७
ति १३–३।

दशरथः संयोक्तुम् ऐच्छत् सकर्मककर्तरिप्रयोगः।

१ दशन्–न. २ प्रकृति –स्त्री.

तम्-द०पु०'तद्'श०द्वि०ए०तुमुन्नन्तकर्मवि०
एवंगुणसंपन्नम्-अ०पु० 'ए०-न्न'श०द्वि०ए०तु०वि०
रामम्-अ० पु० 'राम' श० द्वि० ए० तु० कर्मवि०
सत्यपराक्रमम्-अ०पु०'स०-म'श०द्वि०ए०तु०कर्मवि०
ज्येष्ठम्-अ० पु० 'ज्येष्ठ' श० द्वि० ए० तु० कर्मवि०
ज्येष्ठगुणैः-अ० पु०'ज्येष्ठगुण'श०तृ०ब०युजेःकरणम् ।
युक्तम्-अ० पु० 'युक्त' श० द्वि० ए० तु० कर्मवि०
प्रियम्-अ० पु० 'प्रिय' श० द्वि० ए० तु० कर्मवि०
दशरथः-अ० पु० 'दशरथ' श० प्र० ए०कर्तृपदम् ।
सुतम्-अ० पु० 'सुत' श० द्वि० ए० तु० कर्मपदम् ।
प्रकृतीनाम्-इ०स्त्री०'प्रकृति'श०ष०ब०सम्बन्धबोधकम् ।
हितैः-अ० न० 'हित' श० तृ० ब० युज्धातोः करणम् ।
युक्तम्-अ० पु० 'युक्त' श० द्वि० ए० तु० कर्मवि०
प्रकृतिप्रियकाम्यया-आ०स्त्री०'प्र०—म्या'श०तृ०ए०
हेतुतृतीयान्तम् ।
यौवराज्येन-अ० न०'यौ०-ज्य'श०तृ०ए०संयुजेःकर०
संयोक्तुम्-तुमुन्नन्तं कर्मबोधकमव्ययम् ।
ऐच्छत्-तु०प०इच्छार्थक'इष्'धा०कर्तरिलङ्० प्र०ए०क्रि०
प्रीत्या-इ० स्त्री० 'प्रीति' श०तृ०ए० हेतुतृतीयान्तम् ।
महीपतिः-इ० पु०'महीपति' श० प्र०ए०कर्तृविशेषणम् ।

**महीपतिः**—मह्याः पृथिव्याः पतिः स्वामी महीपतिः (ष० त० ) **दशरथः** दशसु दिक्षु रथः अप्रतिहतगतिकरथो यस्य सः दशरथः ( ष० ब० ) **तम्** पूर्वोक्तम् **एवंगुणसंपन्नम्** एवं पूर्वोक्ताश्च ते गुणाः मनोनिग्रहादयश्च एवंगुणाः ( वि० पू० क० ) एवंगुणैः संपन्नः युक्तः ए०-न्नः ( तृ० त० ) तम् ए०-न्नम् **रामम्** रामनामकं **सत्यपराक्रमम्** सत्यः अन्वर्थः पराक्रमः शौर्यं यस्य सः स०-मः ( ष० ब० ) तं स०-मं **ज्येष्ठं** भरतादिभ्यो वयोऽधिकं ( न केवलं वयोमात्रेण ज्येष्ठः किन्तु गुणैरपीत्याह—ज्येष्ठगुणैर्युक्तमिति ) **ज्येष्ठगुणैः** ज्येष्ठाः सुप्रशस्ताः च ते गुणाः सन्धिविग्रहयानासनद्वैधसमाश्रयाः षट् च ज्येष्ठगुणाः ( वि० पू० क० ) तैः ज्येष्ठगुणैः **युक्तं** संपन्नं **प्रियं** प्रीतिपात्रं **प्रकृतीनां** प्रजानां **हितैः** कल्याणकारकोद्योगैः **युक्तं सुतं** पुत्रं **प्रीत्या** सन्तोषेण **प्रकृतिप्रियकाम्यया** प्रकृतीनाम् अमात्यादीनां प्रियम् इष्टं प्रकृतिप्रियं ( ष० त० ) प्र०-यं कर्तुमिच्छा प्र०-म्या[1] (कृ० वृ० ) तया प्र०-म्यया **यौवराज्येन** युवा तरुणश्चासौ

---

१ "काम्यच्च" ( पा० सू० ३-१-९ ) इति सूत्रेण प्रकृतिप्रियशब्दादिच्छावाच्यायां काम्याचि प्रत्यये तदन्तस्य "सनाद्यन्ता धातवः"( पा० सू० ३-१-३२ इति धातुसंज्ञायाम् "अ प्रत्ययात्" ( पा० सू० ३-३-१०२ ) इति अकारप्रत्यये तदन्ताट्टाप् ।

राजा च युवराजः ( वि० पू० क० ) युवराजस्य राजकुमारस्य कर्म पितरि सत्येव प्रजापालनादि यौवराज्यं (त० वृ० ) तेन यौवराज्येन संयोक्तुं सम्बन्धुं यौवराज्येऽभिषेक्तुमित्यर्थः ऐच्छत् इच्छति स्म ॥ १९ ॥

**तस्याभिषेकसम्भारान्दृष्ट्वा भार्याऽथ कैकयी ।**
**पूर्वं दत्तवरा देवी वरमेनमयाचत ॥**
**विवासनं च रामस्य भरतस्याभिषेचनम् ॥२०॥**

१अभिषेक—अभिषेकः स्नापने वै तथा राज्यनियोजने । ना०
२सम्भार—सम्भारः समुदाये स्यात्संपत्तौ भरणे चये ।
सामग्रीपरिपूर्त्योश्च कथितोऽयं मनीषिभिः ॥ ना०
३भार्या—पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ।
भार्या जाया ऽथ पुम्भूम्नि दाराः स्यात्तु कुटुम्बिनी ॥ म०
४अथ—संशयप्रश्नसाकल्यसमूहारम्भमङ्गले ।
पश्चात्प्रातिज्ञाऽन्वादेशाधिकारेषु अथो अथ ॥ ना०
५पूर्व—पूर्वोऽन्यलिङ्गः प्रागाह पुंबहुत्वे तु पूर्वजान् । ना०
६दा—दाने यच्छति दत्ते च ददाति ग्रहणे त्वयम् ।
अवदत्ते चावददात्यादत्ते परिकीर्तितः ॥

---

१ "गुणवचनब्राह्मणादिभ्यः कर्मणि च" ( पा० सू० ५-१-१२४ ) इति युवराजशब्दात् ष्यञ् षकारञकारावित्संज्ञकौ ।

२ दाण् दाने भ्वा० प०   ३ डुदाञ् दाने जु० उ०

प्रतिदत्ते प्रतिददात्यपि प्रत्यर्पणे तथा ।
प्रतियच्छत्यपि तथा ऽऽरम्भेऽभ्यादत्त इत्यथ ॥
व्याददाति विकासे स्याद् व्याददत्ते ऽन्याङ्गफुल्लने ।
संयच्छते गर्ह्यदाने संयच्छति तु मैथुने ॥
छेदने दाति, दाण्दाञोर्दापो रूपाणि सन्ति हि॥ ना०क्रि॰
७देवी—अभिषिक्ता राजपत्नी देवी त्वन्या तु भोगिनी।नाट॰
८याच्—याचने ऽञ्चत्यञ्चते चार्थयते नार्धतेऽर्दति ।
वनुते नाथति तथा याचते याचति स्मृताः ॥
द्वयोश्चताति चदति भिक्षते त्वात्मने मतः ॥ अ०क्रि॰
९वस—निवासे वसति भ्वादावारोहे ऽधिवसत्यथ ।
अभुक्तावुपपूर्वः स्यान्निवासेऽपि च तौ स्मृतौ ॥
उभौ समीपवासे तु प्रतिवसति कीर्तितः ।
अथ प्रवसति प्रोक्तो विदेशगमने बुधैः ।
वस्ते त्वाच्छादने, स्तम्भे दिवादौ वस्यति स्मृतः ।
स्नेहच्छेदापहारेषु प्रोक्तो वासयति द्वयोः ॥

---

१दाप् लवने अ०प० २अञ्चु गतौ याचने च भ्वा०उ० ३अर्थ उपयाञ्चायाम् चु॰
४ नाथृ नाधृ याञ्चोपतापैश्वर्याशीःषु भ्वा० आशिषि नाथधातुरात्मने॰
ऽन्यत्र परस्मैपदी, नाधधातुरात्मनेपदः । ५ अर्द गतौ याचने च भ्वा०॰
६ वनु याचने त० आ० ७ डुयाचृ याञ्चायाम् भ्वा. उ,
८ चते चदे याचने भ्वा० उ० ९ भिक्ष भिक्षायाम् भ्वा० आ०
१० वस निवासे भ्वा० प० ११ वस आच्छादने अ० आ० १२ वसु स्तम्भे दि॰
१३ वस स्नेहच्छेदापहरणेषु चु० उ०

तथोद्वासयति प्रोक्त उत्पाटनविधावथ ।
गृहाद्बहिःप्रेषणे तु विवासयति कीर्तितः ॥
सुरभीकरणेऽदन्तो द्वयोर्वासयति स्मृतः ॥ ना० क्रि०
तद् २–३ दश् ३–१० कैकयी दशरथज्येष्ठपत्नीनाम ।
वर १–७ एतद् २–३ च २–७ राम ८–३ भरत कैकयीज्येष्ठपुत्रनाम । भार्या वरम् एनम् अयाचत द्विकर्मककर्तरि प्रयोगः । वरं मु० क० एनं गौ० क०

तस्य–द० पु० 'तद्' श० ष० ए० सम्बन्धबोधकम् ।
अभिषेकसम्भारान्–अ०पु०'अ०-र'श०द्वि०व०त्वान्तक०
दृष्ट्वा–त्वाप्रत्ययान्तमव्ययम् ।
भार्या–आ० स्त्री० 'भार्या' श० प्र० ए० कर्तृपदम् ।
अथ–अनन्तरार्थकमव्ययम् ।
कैकयी–ई० स्त्री० 'कैकयी'श० प्र० ए० कर्तृवि०
पूर्वम्–दत्तेति क्रियाविशेषणमव्ययम् ।
दत्तवरा–आ०स्त्री० 'दत्तवरा' श० प्र० ए० कर्तृवि०
देवी–ई० स्त्री० 'देवी' श० प्र० ए० कर्तृवि० ।
वरम्–अ० पु० 'वर' श० द्वि ए० मुख्यकर्मपदम् ।
एनम्–द० पु० 'एतद्' श० द्वि० ए० गौणकर्म ।

---

१ वस निवासे चु० उ० अदन्तः

अयाचत–भ्वा० उ० 'याच्' धा० कर्तरि लङ्० प्र० ए० क्रि०।
विवासनम्–अ० न० 'विवासन' श० द्वि० ए० कर्मणि
च–समुच्चयार्थकमव्ययम् ।
रामस्य–अ० पु० 'राम' श० ष० ए० सम्बन्धबोधकम्
भरतस्य–अ० पु० 'भरत' श० ष० ए० सम्बन्धबोधक
अभिषेचनम्–अ० न० 'अ०–न' श० द्वि० ए० कर्मणि
अथ दशरथेप्सितयौवराज्याभिषेकसामग्रीसम्पादनान
पूर्वं शम्बरासुरविजयकाले दत्तवरा दत्तः दशरथेन
रः इष्टद्वयं कर्तुं प्रतिज्ञा यस्यै सा दत्तवरा ( च० ब०
देवी अभिषिक्ता कैकयी केकयस्य व्यासानदीपश्चिमत
देशाधिपतेः अपत्यं स्त्री कैकयी ( त० वृ० ) भा
दशरथपत्नी तस्य श्रीरामचन्द्रस्य अभिषेकसम्भा
अभिषेकस्य यौवराज्याधिरोहणसंस्कारस्य सम्भाराः साम
(ष० त०)—राः तान्–रान् दृष्ट्वा मन्थरामुखेन विज्ञाय
मस्य विवासनं वास्यते तत् वासनं ( कृ० वृ० ) वि
च तद् वासनं च विवासनम् ( वि० पू० क० ) अरण्य
भरतस्य स्वपुत्रस्य अभिषेचनं यौवराज्यस्थापनं च व
इष्टद्वयम् एनं दशरथम् अयाचत प्रार्थयामास ॥ २०

स सत्यवचनाद्राजा धर्मपाशेन संयतः
विवासयामास सुतं रामं दशरथः प्रियम् ॥

राजन्—राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ ।
यक्षे शक्रे च श्रेष्ठे तु स्यादुत्तरपदे यदि ॥ ना०
पाश—पाशः शस्त्रविशेषे च जाले पक्ष्यादिबन्धने । ना०
संयत—अधिक्षिप्तः प्रतिक्षिप्तो.वद्धे कीलितसंयतौ । वि०
तद् २–३ सत्य २–१२ वचन १–५ धर्म २–९ वस १०–९ सुत १९–५ राम ८–३ दशरथ विशेषनास । प्रिय ३–९ दशरथः सुतं विवासयामास सकर्मककर्तरिप्रयोगः।
सः—द० पु० 'तद्' श० प्र० ए० कर्तृविशेषणम् ।
सत्यवचनात्—अ०न० 'स०–न' श०पं०ए० हेतुपदम् ।
राजा—न० पु० 'राजन्' श० प्र०ए० कर्तृविशेषणम् ।
धर्मपाशेन—अ० पु० 'ध०–श' श०तृ० ए० करणम् ।
संयतः—अ०पु० 'संयत' श० प्र० ए० कर्तृविशेषणम् ।
विवासयामास—चु० उ० विउ० 'वस' धा०कर्तरिलिट्० प्र० ए० क्रि०
सुतम्—अ० पु० 'सुत' श० द्वि० ए० कर्मपदम् ।
रामम्—अ० पु० 'राम' श० द्वि० ए० कर्मवि० ।
दशरथः—अ० पु० 'द०–थ' श० प्र० ए० कर्तृपदम् ।
प्रियम्—अ०पु० 'प्रिय' श० द्वि० ए० कर्मवि० ।
सः पूर्वोक्तः धर्मपाशेन धर्मः न्याय एव पाशः बन्धनं

१ राजन्—पुं० ।

धर्मपाशः ( अ०पू०क० ) तेन-शेन संयतः बद्धः रा
अवधदेशाधिपतिः दशरथः सत्यवचनात् सत्यं यथा
च तद् वचनं भाषणं च –नं ( वि०पू०क ) तस्मात्–ना
द् हेतोः प्रियं प्रीतिपात्रं रामं रामनामकं सुतं पुत्रं विवा
सयामास वनं प्रेषयामास ॥ २१ ॥

**स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।**
**पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात्**

१वन–वनं प्रस्रवणे गेहे प्रवाहेऽम्भसि कानने । ना०
२वीर–वीरः शूरे जिने पुत्रे पत्यौ विष्णौ नटे रसे । ना०
३प्रतिज्ञा–संविदागूः प्रतिज्ञानं नियमाऽऽश्रवसंश्रवाः
अङ्गीकाराऽभ्युपगमप्रतिश्रवसमाधयः ॥
बाढमामों तथा सन्धा प्रतिज्ञा स्वीकृतिः स्त्रियाम् ।
४पाल–चुरादौ रक्षणे ज्ञेयो द्वयोः पालयतीत्ययम् ।
प्रतीक्षायां पालयति प्रत्यनुभ्यां परः क्वचित् ॥ ना० क्रि
५पितृ–पितरो ज्येष्ठबन्ध्वादिजन्ममन्त्राभयप्रदाः ।
कन्यान्नज्ञानदातारश्चाग्निष्वात्तादयः स्मृताः ॥ ना०
६निर्देश–अववादस्तु निर्देशो निदेशः शासनं च सः
शिष्टिश्चाऽऽज्ञा च, संस्था तु मर्यादा धारणा स्थितिः ॥

१ संविद्—स्त्री, आगू—स्त्री.
२ समाधि—पुं०
३ बाढम्, आम्, ओम्, अव्य०
४ पालरक्षणे चु० उ०

८कारण—हेतुर्ना कारणं बीजं, निदानंत्वादिकारणम्।का०
तद् २–३ गम् १६–२ वचन १–८ कैकेयी विशेषनाम०
प्रिय ३–९

स: वनं जगाम स० कर्तरि प्रयोगः।

सः—द० पु० 'तद्' श० प्र० ए० कर्तृपदम्।
जगाम—भ्वा० प० 'गम्' धा० कर्त०लिट्०प्र०ए०क्रि०
वनम्—अ० न० 'वन' श० द्वि० ए० कर्मपदम्।
वीरः—अ० पु० 'वीर'श० प्र० ए० कर्तृवि०
प्रतिज्ञाम्—आ० स्त्री० 'प्रतिज्ञा' श० द्वि०ए० पाल्धा-
तोः कर्मपदम्।
अनुपालयन्—अ० पु० 'अ०-यत्' श० प्र० ए०-
कर्तृविधेयवि०
पितुः—ऋ० पु० 'पितृ' श०ष०ए० सम्बन्धबोधकम्।
वचननिर्देशात्—अ० पु०'व०-श'श०पं०ए०हेतु०
कैकेय्याः—इ० स्त्री० 'कैकेयी' श० ष० ए० सम्ब०
प्रियकारणात्—अ०पु०'प्रि०-ण'श०पं० ए० हेतुवि०

वीरः शूरः सः श्रीरामचन्द्रः कैकेय्याः स्वसापत्नमातुः
प्रियकारणात् प्रियं वरद्वयं कारणं निमित्तं यस्य सः-णः
(ष०ब०) तस्मात्—णात् पितुः दशरथस्य वचननिर्दे-
शात् वचनं भाषितमेव निर्देशः आज्ञा—शः (अ० पु०-

क० )तस्मात्—शांत् हेतोः प्रतिज्ञां 'तद् ब्रूहि व
देवि राज्ञो यदभिकाङ्क्षितम् । करिष्ये प्रतिजाने च
मो द्विर्नाभिभाषते ॥' इत्युक्ताम् अनुपालयन् रक्षन्
वनम् अरण्यं जगाम ययौ ॥ २२ ॥

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह
स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन्

१व्रज–गत्यां व्रजति संन्यासे परिव्रजति संस्मृतः ।
प्रव्रजत्यप्यपगमे ऽपाऽवनिर्भ्यः परः स्मृतः ॥
पराव्रजति तु ज्ञेयः परावर्तनकर्मणि ।
दशमे मार्गसंस्कारगत्योर्व्राजयति द्वयोः ॥ ना०

२भ्रातृ–समानपितृको भ्राता भगिनी च तथा स्त्रियाम्।

३ह–ह पादपूरणे क्षेपे ऐतिह्ये च विनिश्चये ।
विस्मये च विषादे च तथा सम्बोधनेऽव्ययम् ॥ ना

४स्नेह–प्रेमा ना प्रियता हार्दं प्रेम स्नेहो ऽथ दोहद
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः
कामोऽभिलाषस्तर्षश्च, सोऽत्यर्थं लालसा द्वयोः ।

---

१ व्रज गतौ भ्वा० प० २ अप, अव, निर् —उप०
३ व्रज मार्गसंस्कारगत्योः चु. उ. ४ भ्रातृ–पु० ५ प्रेमन्–पुं० न०
६ स्पृहा, ईहा—स्त्री. ७ तृष्—स्त्री. ८ लालस—पुं०—सा—स्त्री.

विनय—विनयो धर्मविद्याऽर्थशिक्षाऽऽचारप्रशान्तिषु ।
तद् २–३ प्रिय २—९ लक्ष्मण विशेषनाम, ( अनु )
गम् १६—२ संपन्न १२—५ सुमित्रा विशेषनाम,
आनन्द १७–२ वृध् १७—३ दयित ३—९ सु
१०—६ अनु २२–४ दश् ३—१० भ्राता तम् अ-
नुजगाम स० कर्त० प्र०

तम्—द० पु० 'तद्' श० द्वि० ए० कर्मवि० ।
व्रजन्तम्—शत्र० पु० 'व्रजत्' श०द्वि०ए०कर्मवि० ।
प्रियः—अ० पु० 'प्रिय' श० प्र० ए० कर्तृवि० ।
भ्राता—ऋ० पु० 'भ्रातृ' श० प्र० ए० कर्तृपदम् ।
लक्ष्मणः—अ० पु० 'लक्ष्मण' श०प्र० ए० कर्तृवि० ।
अनुजगाम—भ्वा० प० अनु उ० गत्यर्थक 'गम्' धा०
कर्त० लिट्० प्र० ए० क्रि० ।

ह—विस्मयार्थकमव्ययम् ।
स्नेहात्—अ० पु० 'स्नेह' श० पं० ए० हेतुपदम् ।
विनयसंपन्नः—अ०पु०'वि–न्न०' श०प्र० ए०कर्तृवि०
सुमित्रानन्दवर्धनः-अ०पु० 'सु–न'श०प्र०ए०कर्तृवि० ।
भ्रातरम्—ऋ०पु०'भ्रातृ'श०द्वि०ए०दश्धा०गौ०कर्म०
दयितः—अ० पु० 'दयित' श० प्र० ए० कर्तृवि० ।

भ्रातुः—ऋ०पु० 'भ्रातृ' श०ष०ए०सम्बन्धबोधक
सौभ्रात्रम्—अ०न० 'सौभ्रात्र' श०द्वि०ए०दृश् धा०मु
अनुदर्शयन्—शत्र०पु० 'अ—यत्' श०प्र०ए०कर्तृवि०

प्रियः प्रीणाति सन्तोषयति सः प्रियः ( कृ०वृ० ) रा
विषयकप्रीतिमान् विनयसम्पन्नः विनयेन ज्येष्ठसेव
रूपानुजाचारेण संपन्नः युक्तः विनयसंपन्नः (तृ०त०
सुमित्रानन्दवर्धनः वर्धयति पोषयति स वर्धनः ( कृ
वृ० ) सुमित्रायाः दशरथकनिष्ठपत्न्याः आनन्दः हर्ष
—नन्दः ( ष० त० ) सुमित्रानन्दस्य वर्धनः पोषक
—र्धनः ( ष० त० ) भ्रातुः श्रीरामचन्द्रस्य दयित
प्रियः लक्ष्मणः लक्ष्मीः शिष्यलक्षणरूपा संपत्तिः वि
द्यते यस्य सः लक्ष्मणः ( त० वृ० ) लक्ष्मणनामक
भ्राता अनुजः सौभ्रात्रं शोभनः उत्तमश्चासौ भ्रात
अनुजश्च सुभ्राता (वि० पू० क०) सुभ्रातुः भावः धर्म
सौभ्रात्रं (त० वृ०) 'न च सीता त्वया हीना न चाहमपि
राघव। मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥' इत्यु
क्तप्रकारेण रामाविरहासहिष्णुत्वम् भ्रातरं श्रीरामचन्द्रम्
अनुदर्शयन् सन् व्रजन्तं वने गच्छन्तं तं श्रीरामचन्द्रं
स्नेहात् प्रेमकारणात् अनुजगाम अनुससार।
विस्मयः ॥ २३ ॥

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ।
जनकस्य कुले जाता देवमायेव निर्मिता ॥२४॥

१नित्य–सततेऽनारताश्रान्तसन्तताविरतानिशम् ।
नित्यानवरताजस्रमप्यथातिशयो भरः ॥
अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ।
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च ॥ स्व०
२प्राण–पुंसि भूम्न्यसवः प्राणश्चैव जीवोऽसुधारणम् । क्ष०
३धा–दधाति धारणे पोषे, कृतौ तु विदधाति हि ।
आदधाति तु विज्ञेयो न्यासोत्पत्त्योस्तथैव च ॥
निदधाति तयोरेवाऽऽच्छादने तु परेः परः ।
उक्तौ त्वभिदधाति स्यात्तिरस्कारेऽभिसंपरः ॥
अनुसं–प्रतिसंभ्यान्तु विचारेऽभिसमोऽप्यथ ।
समाधाने समाधत्ते ऽवधाने ऽवदधाति च ॥
प्रणिधत्ते, सङ्गतौ तु सन्धत्ते, श्रद्दधाति तु ।
श्रद्धायामपिधत्ते तु तिरोधाने तिरः परः ।
अन्तःपरो, डुधाञ्धातुरुभयोः पदयोरयम् ॥ ना० क्रि०
४कुल–कुलं जनपदे वंशे सजातीयगणेऽपि च ।
भूमौ मध्यमहालिक्यां शरीरे भवनेऽपि च ॥ ना०

१ उद्गाढ–न०   २ तीव्र,एकान्त–न०   ३ असु–पुं०
४ डुधाञ् धारणपोषणयोः जु० उ०

५माया–माया दम्भे कृपायां च शाम्बर्यां बुद्धमातरि।
लक्ष्म्यां बुद्धौ हरिद्वारे विद्यायां शक्तिदुर्गयोः ॥ ना

६मा–माने [1]माति [2]मिमीते च [3]मायते ऽपि प्रकीर्तिताः
सत्ये प्रपूर्वा विज्ञेया अपमाने ऽपपूर्वकाः ॥
तथाऽवपूर्वा एते स्युः सन्माने संपरा मताः ।
अनुमाने ऽनुपूर्वाश्च निर्माणे निर्परास्तथा ॥
असम्मतौ विपूर्वाः स्युरूर्ध्वमाने उदः पराः ।
गर्वेऽभिपूर्वाः, प्रतिमाकरणे प्रतिपूर्वकाः ॥
ज्ञेया एते सर्वतस्तु माने च परिपूर्वकाः ॥ ना०कि

राम ८–३ दयित ३–९ भार्या २०–३३ जनक
शेषनाम, जात ४–९ देव ४–८ इव १६—५

रामस्य–अ० पु० 'राम' श०ष० ए० सम्बन्धबोधकम्
दयिता–आ० स्त्री० ' दयिता ' श० प्र० ए० कर्तृवि
भार्या—आ० स्त्री० ' भार्या ' श० प्र० ए० कर्तृवि
नित्यम्—क्रियाविशेषणमव्ययम् ।
प्राणसमाहिता–आ० स्त्री० 'प्रा–ता' श०प्र०ए०कर्तृवि
जनकस्य—अ०पु० 'जनक' श०ष०ए०सम्बन्धबोधक

१ मा माने अ० प०
२ माङ् माने शब्दे च जु० आ०   ३ माङ् माने शब्दे च दि० ओ०।

कुले—अ० न० 'कुल' श० स० ए० औपश्लेषिकाधिकरणम् ।
जाता—आ० स्त्री० 'जाता' श० प्र० ए० कर्तृवि०
देवमाया—आ० स्त्री० 'दे—या' श० प्र० ए० कर्तृवि०
इव—निश्चितार्थकमव्ययम् ।
निर्मिता—आ० स्त्री० 'निर्मिता' श० प्र० ए० कर्तृवि०

रामस्य श्रीरामचन्द्रस्य दयिता प्रिया भार्या धर्मपत्नी नित्यं निरन्तरं प्राणसमाहिता प्राणैः असुभिः समाहिता रामाप्रियकरणे तत्परा—हिता (तृ० त०) जनकस्य मिथिलाधिपतेः कुले वंशे जाता उत्पन्ना निर्मिता अवतीर्णा देवमाया इव देवस्य परमेश्वरस्य माया आदिशक्तिः देवमाया (ष० त०) एव ॥ २४ ॥

**सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ।**
**सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥**
**पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २५ ॥**

१नारी—स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा म०
२उत्तम—क्लीबे प्रधानं प्रमुखप्रवेकानुत्तमोत्तमाः
मुख्यवर्यवरेण्याश्च प्रवर्हो ऽनवराध्र्यवत्
पराध्र्याग्रप्राग्रहरप्राग्र्याग्र्याग्रीयमग्रियम् वि०

१ योषित् —स्त्री०

३वधू—वधूः पत्न्यां स्नुषानार्योः स्पृक्कासारिवयोरपि ना
४सीता—स्वर्णद्यां भूमिपुत्र्यां च सीता लाङ्गलपद्धतौ ना
५अपि—गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ना
६यथा—व वा यथा तथैवैवं साम्ये ऽहोही च विस्मये अ
७पुर—पुरं शरीरे नगरे गृहपाटलिपुत्रयोः ना
८दूर—नेदिष्ठमन्तिकतमं स्याद् दूरं विप्रकृष्टकम् वि

सर्व ३–३ लक्षण ११–१० सम्पन्न १२—५(अनु गम् १६–२ राम ८—३ शश पशुविशेषनाम, रोहि विशेषनाम, पितृ २२–६ दशरथ विशेषनाम, च २– सीता रामम् अनुगता स० कर्त० प्र०, पौरैः रामः अनु गतः, दशरथेन रामः अनुगतः कर्म० प्र० उभयत्र राम इति उपस्थिताध्याहृतं कर्म

सर्वलक्षणसम्पन्ना—आ० स्त्री०'स—न्ना'श०प्र०ए०कर्तृ
नारीणाम्—ई० स्त्री०'नारी'श०ष०व०निर्धारणषष्ठ्यन्त
उत्तमा—आ० स्त्री० 'उत्तमा' श० प्र० ए०कर्तृ
वधूः—ऊ० स्त्री० 'वधू' श० प्र० ए० कर्तृवि०
सीता—आ० स्त्री० 'सीता' श० प्र०ए० कर्तृपद
अपि—समुच्चयार्थकमव्ययम् ।
अनुगता—कृदन्तक्रियापदम् ।

१ तथा, इव, एवम्—अ०

रामम्—अ० पु० 'राम' श० द्वि० ए० कर्मपदम्।
शशिनम्—इ०पु० 'शशिन्' श०द्वि०ए०कर्मोपमापदम्।
रोहिणी—ई० स्त्री० 'रोहिणी'श० प्र० ए० कर्त्रुपमा०
यथा—उपमार्थकमव्ययम्।
पौरैः—अ० पु० ' पौर ' श० तृ० ब० कर्तृपदम्।
अनुगतः—अ० पु० 'अ—त'श०प्र०ए०कृदन्तक्रियापदम्।
दूरम्—क्रियाविशेषणमव्ययम्।
पित्रा—ऋ० पु० ' पितृ ' श० तृ० ए० कर्तृवि०
दशरथेन—अ० पु० ' दशरथ ' श० तृ०ए०कर्तृपदम्।
च—समुच्चयार्थकमव्ययम्।

सर्वलक्षणसम्पन्ना सर्वाणि सम्पूर्णानि च तानि लक्षणानि सामुद्रिकोक्तस्त्रीचिन्हानि—णानि ( वि०पू०क० )—क्षणैः सम्पन्ना युक्ता—म्पन्ना ( तृ०त० )अत एव नारीणां स्त्रीणां मध्ये उत्तमा प्रमुखा वधूः पत्नी सीता जनककन्या अपि रोहिणी शशिनं शशः पशुविशेषः अङ्के अस्ति यस्य सः शशी ( त० वृ० ) तं शशिनं यथा चन्द्रमिव रामं श्रीरामचन्द्रम् अनुगता अन्वगच्छत्। पौरैः पुरे नगरे भवा उत्पन्नाः पौराः (त०वृ०) तैः पौरैः अयोध्यानगरवासिबालवृद्धादिभिः दूरं तमसानदीपर्यन्तं पित्रा जनकेन दशरथेन दशरथनामकायोध्याधिपतिना च द्वारपर्यन्तमेव

अनुगतः अनुसृतः ॥ २५ ॥

शृङ्गिवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम्
गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥२

१शृङ्ग—शृङ्गं प्रभुत्वे शिखरे चिन्हे क्रीडाम्बुयन्त्रके ।
शिलोत्कर्षविषाणेषु शृङ्गः स्यात्कूर्चशीर्षके ॥ ना०
२वेर-प्रतिच्छन्दः प्रतिनिधिर्वेरं च प्रतिरूपकम् । १
प्रतिमानं प्रतिच्छाया प्रतिमा प्रतियातना ॥
प्रतिबिम्बं प्रतिकृतिरर्चा, साम्यं तु चोपमा ॥ शू०
३सूत-क्षत्रियाद् ब्राह्मणीजेऽपि सूतः सारथिवन्दिनोः ना०
४गङ्गा-गङ्गा विष्णुपदी जन्हुतनया सुरनिम्नगा ।
भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ वा०
५कूल-कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ वा०
६सृज्-उत्साधने क्रिये ज्ञेये सृज्यते सृजतीति च । ग
त्यागे उदः परे, वेस्तु दानेऽपि परिकीर्तितः ॥ व
संसृज्यते संसृजति सम्बन्धे तुर्यषष्ठयोः ॥ ना०क्रि
७गुह-गुहोऽश्वे रामभक्ते च विष्णौ स्कन्दे शिवेऽपि च ।
८सद्-गतौ नाशे विशरणे सीदत्यथ प्रसीदति ।

१रोधस् न० २ सृज विसर्गे दि० आ० ३ सृज विसर्गे तु० प०

प्रसादे ऽथ तिरस्कारे प्रसीदति निषीदति ॥
उपवेशे, विषादे तु विषीदत्यथ सङ्गतौ ।
आसीदति च शोके तु प्रतिषीदत्यधः परः ॥
आरोहणे ऽप्यथोन्मूले उत्सीदत्यभिषीदति ।
परितो गमने षद्लृ षोपदेशः प्रकीर्तितः ॥

९निषाद–निषादः श्वपचे भिल्ले स्वरभेदे च धीवरे ना०
१०अधि–अधीशे ऽधिकसप्तम्योरधिकारोर्ध्वभागयोः ना०
पुर २९–७ धर्म ५–९ आत्मन् ४–१ पति १३–३
प्रिय ३–९ तद् २–३ धा २४–३ राम ८–३ लक्ष्मण
विशेषनाम, च २–७ सीता २५–४ धर्मात्मा सूतं व्यस-
र्जयत् स० कर्त प्र० गुहेन रामः हितः कर्मणि प्र०
शृङ्गिवेरपुरे–अ० न० 'शृ–र' श०स० ए० औप०
सूतम्–अ० पु० 'सूत' श० द्वि० ए० कर्मपदम् ।
गङ्गाकूले–अ०न० 'ग–ल' श० स० ए० औप० कर०
व्यसर्जयत्–तु०प०वि उप०विसर्गा०ण्यन्त'सृज्'धा० कर्त०
लङ्लकार० प्रथम० ए० क्रियापदम् ।
गुहम्–अ० पु० 'गुह' श० द्वि० ए० ल्यबन्तस्य कर्म ।
आसाद्य–ल्यबन्तमव्ययम् ।

---

१ षद्लृ विशरणगत्यवसादनेषु भ्वा० प० सीदति, ससाद २ अधि–अ०

धर्मात्मा—न० पु० 'ध-न्' श० प्र० ए० कर्तृपदम्।
निषादाधिपतिम् इ०पु०'नि–ति'श०द्वि०ए०ल्य०कर्म
प्रियम्—अ० पुं० 'प्रिय' श० द्वि० ए०ल्यव० कर्मवि०
गुहेन—अ० पु० 'गुह' श० तृ० ए० कर्तृपदम्।
सः—द० पु० 'तद्' श० प्र० ए० कर्मवि०
हितः—अ० पु० 'हित' श० प्र० ए० कृद० क्रि०
रामः—अ० पु० 'राम' श० प्र० ए० कर्मपदम्।
लक्ष्मणेन—अ० पु० 'लक्ष्मण' श० तृ० ए० उप० तृ
च—समुच्चयार्थकमव्ययम्।
सीतया—आ०स्त्री०'सीता'श०तृ०ए० उपपदतृतीयान्तम्

धर्मात्मा—धर्मः न्यायरूपः आत्मा चित्तं यस्य सः—
( ष० ब० ) श्रीरामचन्द्रः शृङ्गिवेरपुरे शृङ्गाणि विषाण
नि सन्ति येषां ते—णः ( त० वृ० ) )—णाम् कृष्णसार
दीनां वेराणि सजातीयमृगग्रहणार्थं कृत्रिमशरीराणि यस्मि
न् तत्—वेरं ( स० ब० )—वेरं च तत् पुरं नगरं च—
( वि० पू० क० ) तस्मिन्—रे निषादाधिपतिं नि
दानां भिल्लानाम् अधिपतिः स्वामी—तिः (ष० त०)
—तिं प्रियं प्रीणाति सन्तोषयति सः—यः ( कृ०वृ०
तं प्रियं गुहम् आसाद्य प्राप्य गङ्गाकूले गङ्गायाः भागी
थ्याः कूलं तीरं—लं ( ष०त० ) तस्मिन्—ले सूतं

मन्तनामकं सारथिं व्यसर्जयत् निवर्तयामास। गुहेन निषादाधिपतिना लक्ष्मणेन सुमित्रापुत्रेण सीतया जानक्या च सह सः रामः श्रीरामचन्द्रः हितः धृतः, तरणार्थं नौकायामुपवेश्य पारं नीत इत्यर्थः ॥ २६ ॥

**ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः।**
**चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥**
**रम्यमावसथं कृत्वा रममाणा वने त्रयः।**
**देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् २७**

[1]तेव्—क्रीडायां विजिगीषायां मदे मोदे द्युतौ स्तुतौ।
व्यवहारगतौ कान्तौ तेवते स्वप्न इत्यपि ना० क्रि०

नदी—खेयं तु परिखाऽऽधारस्त्वम्भसां यत्र धारणम्।
स्यादालवालमावालमावापोऽथ नदी सरित्।
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी
स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगाऽऽपगा
कूलंकषा निर्झरिणी रोधोवक्त्रा सरस्वती वा०

[2]तॄ—तरति प्लवने तारे दाने तु वितरत्ययम्।
प्रतारणे प्रपूर्वस्तॄ णिजन्तस्तारयत्ययम् ना० क्रि०

उदक—[3]आपः स्त्री भूम्नि [4]वार्वारि सलिलं कं दकं जलम्

---

१ तेवृ देवने भ्वा० आ०  २ तॄ प्लवनतरणयोः भ्वा० प०

३ अप्—स्त्री० नित्यबहुवचनान्तोऽयम्।  ४ वार्—न०

पयः कीलालममृतं जीवनं भुवनं वनम्
कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम्
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्
मेघपुष्पं घनरसः त्रिषु द्वे आप्यमम्मयम् वा॰

५चित्र—चित्रं तिलक आकाशे आलेख्ये कर्बुरेऽद्भुते ना॰

६कूट—मायानिश्चलयन्त्रेषु कैतवानृतराशिषु
अयोघने शैलशृङ्गे हलाङ्गे कूटमस्त्रियाम् ना॰

७अनु—अनु लक्षणवीप्सेत्थंभूतभागेषु सन्निधौ
सादृश्याऽऽयामहीनेषु पश्चादर्थसहार्थयोः ॥ ना॰

८आप्—व्याप्तावाप्नोति लब्धौ तु प्राप्नोत्यथ परः परा
पर्याप्तावपि सम्पूर्तौ समाप्तौ तु समः परा ॥
चुरादावापति प्राप्तौ द्वयोरापयतीत्यपि ॥ ना॰ क्रि॰

९रम्य—पटुमूले च वीर्ये च रम्यं स्यादथ चम्पके
वटवृक्षे च रम्यः स्यात् चारौ बलकरे त्रिषु ना॰

१०आवसथ—धर्मशालावन्ह्यगारस्थानेष्वावसथोऽस्त्रियाम्

११रम्—क्रीडायां रमतेऽथोपरमति स्यान्मृतौ तथा ।

---

१ पयस्, पाथस्—न॰
२ अम्भस्—अर्णस्—न॰
३ आप्ल व्याप्तौ स्वा॰ प॰
४ आप्ल लम्भने॰ चु॰ उ॰ विभाषितनी॰
५ रमु क्रीडायाम् भ्वा॰ आ॰

वैराग्येऽपि, विपूर्वस्तु वैराग्ये विरतावपि ॥
अन्तर्भावितणेरर्थे आत्मने नित्यमीरितः ।
व्युपपूर्वस्ततोऽन्यत्र परस्मै वा प्रकीर्तितः ॥ ना० क्रि०
२गन्धर्व—पुंस्कोकिले गायने च मृगभेदे तुरङ्गमे ।
अन्तराभवदेहे च गन्धर्वश्च नभश्चरे ॥ ना०

वन २२–१ गम् १६–२ वहु ७–१ भरद्वाज विशेषनाम, शासन २२–६ क्त २–११ त्रि सङ्ख्यावाचकम्, देव ४–८ सङ्काश ११–१ तद् २–३ वस् २०–९ सुख १७–२

ते न्यवसन् अ० कर्त० प्र०

तेवनेन—अ० न० 'तेवन'श० तृ०ए० गमेः करणम्।
वनं—अ०न० 'वन' श० द्वि० ए० गमेः कर्म ।
गत्वा—त्वाप्रत्ययान्तमव्ययम् ।
नदीः—ई० स्त्री० 'नदी' श० द्वि० व० तरतेः कर्म ।
तीर्त्वा—त्वाप्रत्ययान्तमव्ययम् ।
वहूदकाः—आ०स्त्री०'व–का'श०द्वि०व०तरतेः कर्मवि०
चित्रकूटम्—अ०पु०'चि–ट'श०द्वि०ए०अनुप्रापेः कर्म ।
अनुप्राप्य—ल्यबन्तमव्ययम् ।
भरद्वाजस्य—अ०पु० 'भ–ज' श० ष०ए० सम्बन्धबो०
शासनात्—अ०न०'शासन' श० पं०ए० हेतुपदम् ।

रम्यम्-अ० पु० 'रम्य' श०द्वि० ए०करोतेः कर्म
आवसथम्-अ०पु०'आ—थ' श०द्वि०ए०करोतेः क
कृत्वा—त्वाप्रत्ययान्तमव्ययम् ।
रममाणाः—अ० पु० 'र—ण' श०प्र०ब०कर्तृवि०
वने—अ० न० 'वन' श०स० ए० औप० करण
त्रयः—नित्यबहु० इ० पु० 'त्रि'श० प्र० ब० कर्तृवि
देवगन्धर्वसङ्काशाः–अ० पु० 'दे–श' श० प्र०ब०कर्तृ
तत्र—त्रल्प्रत्ययान्तसप्तम्यन्तार्थकमव्ययम् ।
ते—द० पु० 'तद्' श० प्र० ब० कर्तृपदम् ।
न्यवसन्-भ्वा०प०निउप०'वस्'धा०कर्त०लङ्०प्र०
सुखम्—अ० न० 'सुख' श०द्वि० ए०क्रियावि०

देवगन्धर्वसङ्काशाः देवाः सुराश्च गन्धर्वाः नभश्च
देवगन्धर्वाः ( इ० द्व० )—न्धर्वैः तुल्याः देवगन्धर्व
ङ्काशाः ( तृ० त० ) त्रयः त्रिसङ्ख्याकाः ते रामाद
तेवनेन पदातिगमनेन वनम् अरण्यं गत्वा बहूदकाः
हु विपुलम् उदकं जलं यासु ताः बहूदकाः (स०ब०)
दीः गङ्गादिनदीः तीर्त्वा उत्तीर्य चित्रकूटं चित्राणि
राणि कूटानि शिखराणि यस्य सः–कूटः ( ष० ब०
तं–टम् अनुप्राप्य समीपं गत्वा भरद्वाजस्य भरद्वाज
षेः शासनात् आज्ञया रम्यं सुन्दरम् आवसथं पर्णशा

गृहं कृत्वा विरच्य तत्र तस्मिन् वने अरण्ये रममाणाः क्रीडन्तः सन्तः सुखम् आनन्देन न्यवसन् वसन्ति स्म २७

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा।
राजा दशरथः स्वर्गं जगाम विलपन् सुतम्॥२८॥

पुत्र— आत्मजस्तनयः सूनुः सुतः पुत्रः, स्त्रियां त्वमी।
आहुर्दुहितरं, सर्वेऽपत्यं तोकं तयोः समे॥ म०

शोक—वैरं विरोधो विद्वेषो मन्युशोकौतुशुक्स्त्रियाम्।ना०

आतुर—ग्लानग्लास्नूआमयावी।विकृतोव्याधितोऽपटुः।
आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ॥ म०

स्वर्ग—स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः।
सुरलोको द्योदिवौ द्वे स्त्रियां, क्लीवे त्रिविष्टपम्॥ स्व०

लप—लपति व्यक्तवाचि स्यादपलपति निह्नवे।
व्यर्थवाचि प्रलपति, विलपति तु संस्मृतः॥
विलापे, संलपति तु मिथोवाचि प्रकीर्तितः।
अनुलपति तु संप्रोक्तो मुहुर्भाषणकर्मणि॥ ना० क्रि०

चित्र २७–५ कूट २७–६ गम् १६–२राम ८–३

---

१ दुहितृ-स्त्री. २ शुच्-स्त्री. ३ ग्लास्नु-पुं. ४ आमयाविन्-पुं.
५ स्वर्-अव्य. ६ दिव्-स्त्री. ७ लप व्यक्तायां वाचि तु. प.

तथा २५--६राजन्२१—१ दशरथ विशेषनाम,सुत१९-
दशरथः स्वर्गं जगाम स० कर्तरि प्रयोगः ।

चित्रकूटम्—अ० पु० 'चित्रकूट' श०द्वि०ए० गमेः क
गते—अ० पु० 'गत' श०स०ए० सत्सप्तम्यन्तवि०
रामे—अ० पु० 'राम' श० स०ए० सत्सप्तम्यन्तम्
पुत्रशोकातुरः—अ० पु०'पु—र' श०प्र० ए० कर्तृवि
तथा—प्रकारार्थकमव्ययम् ।
राजा—न० पु० 'राजन्' श० प्र० ए० कर्तृवि०
दशरथः—अ० पु० 'दशरथ' श०प्र०ए० कर्तृपदम्
स्वर्गम्—अ० पु० 'स्वर्ग' श० द्वि० ए० कर्मपदम्
जगाम—भ्वा०प०'गम'धातोः कर्तरि लिट्०प्र०ए०
विलपन्—शत्रन्तपुं० 'विलपत्' श०प्र०ए०कर्तृवि०
सुतम्—अ० पु० 'सुत' श० द्वि०ए०लपधातोः कर्म

पुत्रशोकातुरः पुत्रस्य रामस्य शोकः-कः ( ष० त०
-केन आतुरः व्याधितः -रः ( तृ० त० ) राजा अव
धदेशाधिपतिः दशरथः रामपिता रामे श्रीरामचन्द्रे तथ
पदातिगमनेन चित्रकूटं चित्रकूटनामकं पर्वतं गते य
सति सुतं पुत्रं श्रीरामचन्द्रं विलपन् तद्वियोगेन विल
कुर्वन् सन् स्वर्गं जगाम ययौ ॥ २८ ॥

मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ।
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः॥२९

१तु—तु पादपूरणे भेदे समुच्चयेऽवधारणे ।
पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे ॥ ना०
२द्विज——केकिताक्ष्यावहिभुजौ दन्तविप्राण्डजा द्विजाः । ना०
३न——अभावे नह्य नो नापि मास्म मा ऽलं च वारणे । ना०
४बल——स्थौल्यसामर्थ्यसैन्येषु बलं, ना काकसीरिणोः । ना०

मृ ( ङ् ) प्राणत्यागे । तद् २–३ भरत, वसिष्ठ विशेषनाम, प्रमुख २५–२ युज् ३–२ राजन् २१–१ इष् ५–१ महत् ८–७

भरतः राज्यं नैच्छत् स० कर्तरि प्रयोगः ।

मृते——अ० पु० 'मृत' श०स०ए० सत्सप्तम्यन्तवि० वि०
तु——अवधारणार्थकमव्ययम् ।
तस्मिन्——द० पु० 'तद्' श०स०ए० सत्सप्तम्यन्तम् ।
भरतः——अ० पु० 'भरत' श० प्र० ए० कर्तृपदम् ।
वसिष्ठप्रमुखैः—अ०पु०'व–ख'श०तृ०ब०युजेःकर्तृवि०
द्विजैः——अ० पु० 'द्विज' श०तृ०ब०युजधातोः कर्तृपदम्।
नियुज्यमानः——अ० पु० 'नि–न'श० प्र०ए० कर्तृवि०

१ अहिभुज्-पु. २ नहि, अ-अव्य०

राज्याय–अ०न०'राज्य'श०च०ए०अप्रयुक्ततुमर्थक
न—निषेधार्थकमव्ययम् ।

ऐच्छत्—तु०प०'इष' धातोः कर्तरिलङ्०प्र०ए०क्रि०
राज्यम्—अ० न० 'राज्य' श० द्वि० ए० कर्मपदम्
महाबलः—अ० पु० 'महाबल' श० प्र० ए० कर्तृवि०

तस्मिन् दशरथे मृते मरणं प्राप्ते सति तु वसिष्ठप्रमुखैः
वसिष्ठः वसिष्ठऋषिः प्रमुखः मुख्यो येषां ते–खाः (ब०
ब० ) तैः–खैः द्विजैः ब्राह्मणैः राज्याय राज्ञः नृपस्य
कर्म प्रजापालनादि राज्यं ( त० वृ० ) तस्मै राज्याय प्र
जापालनादि कर्तुं नियुज्यमानः आज्ञप्यमानः महाबलः
महत् विपुलं बलं यस्य सः–लः ( ष० ब० ) भरतः कै
कयीपुत्रः राज्यं राज्ञः नृपस्य भावः धर्मः राज्यं ( त०
वृ० ) नृपत्वं न ऐच्छत् न इयेष ॥ २९ ॥

**स जगाम वनं वीरो रामपाद¹प्रसादकः।**
**गत्वा तु स महात्मानं रामं सत्यपराक्रमम्।**
**अयाचद्भ्रातरं राममार्यभावपुरस्कृतः॥ ३०॥**

१पाद—पादो मूलास्तुर्यांशाङ्घ्रिषु प्रत्यन्तपर्वते ।

१ "राजश्वशुराद् यत्' ( अ० सू० ४-१-१३७ ) इति कर्मणि भावे
त्प्रत्ययः ।

२सद्—गतौ नाशे विशरणे सीदत्यथ प्रसीदति ।
प्रसादेऽथ तिरस्कारेऽपसीदति, निषीदति ॥
उपवेशे, विषादे तु विषीदत्यथ सङ्गतौ ।
आसीदति च शोके तु प्रतिषीदत्यधेः परः ॥
आरोहणेऽप्यथोन्मूले उत्सीदत्यभिषीदति ।
परितो गमने षद्लृ षोपदेशः प्रकीर्तितः ॥ ना० क्रि०

३भाव—भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु । ना०

४पुरस्कृत—पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतःकृते । ना०

तद् २–३ गम् १६–२ वन २१–१ वीर २२–२ राम ८–३ तु २९–१ महत् ५–७ आत्मन् ४–१ सत्य २–१२ पराक्रम १९–१ याच् २०–८ भ्रातृ २३–२ आर्य १६–७

सः वनं जगाम स० कर्तरि प्र०, सः रामं ( वक्ष्यमाणम् ) अयाचत् द्वि० कर्त० प्र०

सः—द० पु० 'तद्' श० प्र० ए० कर्तृपदम् ।

जगाम—भ्वा०प०'गम' धातोः कर्तरिलिट्०प्र०ए०क्रि०

वनम्—अ० न० 'वन' श० द्वि० ए० कर्मपदम् ।

वीरः—अ० पु० 'वीर' श० प्र० ए० कर्तृवि०

रामपादप्रसादकः-अ०पु०'रा-क'श०प्र०ए०कर्तृवि०वि०

---

१ षद्लृ विशरणगत्यवसादनेषु भ्वा० प०

गत्वा—त्वाप्रत्ययान्तमव्ययम् ।
तु—समुच्चयार्थकमव्ययम् । सः
महात्मानं—न० पु०'महात्मन्'श०द्वि०ए०गमेः कर्म
रामम्—अ० पु० 'राम' श० द्वि० ए० गमेः कर्म।
सत्यपराक्रमम्-अ०पु०'स–म'श०द्वि०ए०गमेःकर्म
अयाचद्–भ्वा०उ०'याच'धातोःकर्तरिलङ्०प्र०ए०क्रि
भ्रातरम्—ऋ० पु० 'भ्रातृ' श०द्वि०ए० गौणकर्म
रामम्—अ० पु० 'राम' श० द्वि० ए० गौणकर्म।
आर्यभावपुरस्कृतः-अ०पु०'आ–त'श०प्र०ए० कर्तृ
वीरः शूरः सः भरतः वनं चित्रकूटसमीपमरण्यं रा

पादप्रसादकः रामस्य श्रीरामचन्द्रस्य पादौ चरणौ-
( ष० त० )–दौ प्रसादयितुम् आराधयितुं–दकः ( 
वृ० ) जगाम ययौ। सः भरतःमहात्मानं महान् विशा
आत्मा चित्तं यस्य सः–त्मा ( वि० पू० क० ) तं–त्मा
सत्यपराक्रमं सत्यः अव्यर्थः पराक्रमः शौर्यं यस्य सः–
(ष०व०)तं–मम् रामं श्रीरामचन्द्रंगत्वा तु प्राप्य च भ्रात
अग्रजं रामं वक्ष्यमाणम् आर्यभावपुरस्कृतः आर्यः स
नश्चासौ भावः अभिप्रायश्च–वः ( वि० पू० क० )-

१ "तुमन्ण्वुलौ क्रियायां क्रियार्थायाम" ( अ० सू० ३-३-१०) इति पु

पुरस्कृतः अग्रतःकृतो येन सः—तः (तृ० व०) सन् अयाचद् अर्थयामास ॥ ३० ॥

त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।
रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥
न चैच्छत् पितुरादेशाद्राज्यं रामो महाबलः ॥ ३१

१परम—परमं स्यादनुज्ञायामव्ययं, परमं परे । ना०
२उदार—उदारो दातृमहतोर्दक्षिणे चाभिधेयवत् । ना०
३मुख—वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् । म०
४दिश—दाने दिशति दिशते आज्ञायामादिशत्यपि ।
नेः परोऽयं घजन्ते वै, सन्देशे सन्दिशत्यथ ॥
अभिधाने निर्दिशति, उद्देशे उद्दिशत्यपि ।
अतिदिशति चारोपे, व्याजे त्वपदिशत्यथ ॥
व्यपदिशति संज्ञायां, प्रत्याभ्यां तु निराकृतौ ।
कार्यान्तरविधानार्थमन्वादिशति कीर्तने ॥
उपात् परस्तूपदेशे षष्ठेऽयं 'दिश' कीर्तितः ॥ ना०क्रि०

युष्मद् ५–२ एव ७–३ राजन् २१–१ धर्म २–९ ज्ञा २–१० इति ६–३ राम ८–३ वचस् १–५ ब्रू ६–७ अपि २५–५ सु १०–७ महत् ५–७ यशस्

१ दिश अतिसर्जने तु० उ०

१२-३ न २९-३ च २-७इष् ५-१ पितृ २२-५स
२७-११ बल २९-४

त्वम् असि अकर्मकप्र०, (भरतः) रामं वचः अब्रवीत्
द्वि० कर्त० प्र०, रामः राज्यं नैच्छत् स० कर्त० प्र०
त्वं—द०त्रि० 'युष्मद्' श० प्र० ए० कर्तृपदम्।
एव—निश्चयार्थकमव्ययम्।
राजा—न०पु० 'राजन्' श०प्र०ए०कर्तृवि०वि०
धर्मज्ञः—अ०पु० 'धर्मज्ञ' श०प्र०ए०कर्तृवि०
इति—स्वरूपार्थकमव्ययं मुख्यकर्मवि०
रामम्—अ०पु०'राम' श० द्वि० ए० गौणकर्म।
वचः—स० न० 'वचस्' श० द्वि०ए० मुख्यकर्म।
अब्रवीत्—अ० उ० 'ब्रू' धा० कर्त० लङ्० प्र० ए०
रामः—अ० पु० 'राम' श० प्र० ए० कर्तृपदम्।
अपि—पक्षान्तरार्थकमव्ययम्।
परमोदारः,सुमुखः,सुमहायशाः(शस्) पु०प्र०ए०कर्तृ
न—निषेधार्थकमव्ययम्।
च—निश्चयार्थकमव्ययम्।
ऐच्छत्—तु०प० 'इष' धा० कर्तरिलङ् ल०प्र०ए०
पितुः—ऋ०पु०'पितृ' श०ष०ए०दिशेः कर्तृपदम्।

आदेशात्--अ०पु०'आदेश' श०प०ए०हेत्वर्थकम् ।
राज्यम्--अ०न० 'राज्य' श०द्वि०ए०कर्मपदम् ।
रामः, महाबलः--पु०प्र०ए०कर्तृवि०

भरतः धर्मज्ञः धर्मम् आचारं ज्येष्ठे भ्रातरि सति कनिष्ठो राज्यं नार्हति इति जानाति सः--ज्ञः (उप०त०) त्वम् एव राजा अवधाधिपतिः असि इति वचः वाक्यं रामं श्रीरामचन्द्रम् अब्रवीत् उक्तवान् । परमोदारः परमः अत्यन्तं चासौ उदारः महान् च--रः ( वि०पू०क० ) सुमुखः सुष्ठु प्रसन्नं मुखं वक्त्रं यस्य सः--खः ( ष०ब० ) सुमहायशाः अतिशयितं च तत् महत् विपुलं च--हत् ( वि०पू० क० )--हत् यशः कीर्तिः यस्य सः--शाः ( ष०ब० ) रामः रमयति लोकान् अनुरञ्जयति सः रामः ( कृ०वृ० ) महाबलः महत् बलं सामर्थ्यं यस्य सः--लः ( ष०ब० ) रामः अपि श्रीरामचन्द्रस्तु पितुः दशरथस्य आदेशात् आज्ञया राज्यं नृपत्वं न च ऐच्छत् नैवैच्छत् ॥ ३१ ॥

पादुके चास्य राज्याय न्यासं दत्त्वा पुनःपुनः ॥
निवर्तयामास ततो भरतं भरताग्रजः ॥३२॥

१. पादुका--पिटकः पेटकः पेटा मञ्जूषाऽथ विहङ्गिका ।
भारयष्टिस्तदालम्बि शिक्यं काचोऽथ पादुका ॥

पादूरुपानत् स्त्री सैवानुपदीना पदायता । शः

२न्यास—पुमानुपनिश्चिन्र्यासः, प्रातिदानं तदर्पणम् ।

३ पुनःपुनः—मुहुः पुनःपुनः शश्वदभीक्ष्णमसकृत्समाः

४वृत—वर्तने वर्तते ऽभ्यासे प्रोक्त आवर्तते इति ।

निर्वर्तते तथोत्पादे, परावृत्तौ निवर्तते ॥

स्यात् परावर्ततेऽप्यत्र, प्रवृत्तौ तु प्रवर्तते ।

अनुपूर्वोऽनुरोधे स्यात्परिणामे विवर्तते ॥

दुर्वर्तते तु दुर्वृत्तौ तथा स्यादपवर्तते ।

उद्वर्ततेऽपि, सम्प्रोक्तो निर्मलीभवनेऽप्ययम् ॥

परिवृत्तौ बुधैः प्रोक्तः परिवर्तत इत्यथ ।

वरणे वृत्यते, वर्तयति स्याद्भाषणे द्वयोः ॥ ना०क्रि

५अग्रज-वर्षीयान्दशमीज्यायान्,पूर्वजस्त्वग्रियोऽग्रजः

च २–७ इदं २–३ राजन् २१–१ दा २०–६ तद्

–२ भरत विशेषनाम ।

भरताग्रजः भरतं निवर्तयामास स० र्कतरि प्र०

पादुके—आ०स्त्री०'पादुका' श० द्वि०द्वि०ददातेः कर्म

१ उपानह्—स्त्री०  २ वृतु वर्तने भ्वा०आ०

३ वृतु वरणे दि० आ०४ वृतु वृधु भाषार्थाः चु० उ०

५ वर्षीयस्-सी, दशमिन् नी—त्रि०  ६ ज्यायस्—सी त्रि०

७ अग्रिय-या त्रि०

च — पक्षान्तरवाचकमव्ययम् ।
अस्य —मू० पु० 'इदं' श० ष० ए० सम्बन्धबोधकम् ।
राज्याय—अ० न० 'राज्य' श० च० ए० तुमुन्नन्तार्थकम् ।
न्यासम्-अ०पु०'न्यास'श०द्वि०ए०ददातेःकर्मवि०वि० ।
दत्त्वा —त्वाप्रत्ययान्तमव्ययम् ।
पुनःपुनः—अव्ययम् ।
निवर्तयामास–भ्वा० आ० नि उप० ण्यन्त 'वृत' धा० कर्तरिलिट्० प्र० ए० क्रि० ।
ततः—तसिल्प्रत्ययान्तमव्ययम् ।
भरतम्—अ० पु० 'भरत' श० द्वि० ए० कर्मपदम् ।
भरताग्रजः–अ० पु० 'भ-ज' श० प्र० ए० कर्तृपदम् ।

पादुके च किन्तु स्वपादुके राज्याय राज्यं कर्तुम् अस्य भरतस्य न्यासं निक्षेपं दत्त्वा अधीनीकृत्य भरताग्रजः भरतस्य अग्रजः पूर्वजः–जः ( ष० त० ) रामचन्द्रः भरतं ततः वनात् पुनःपुनः मुहुः निवर्तयामास परावर्तयामास ॥ ३२ ॥

**स काममनवाप्यैव रामपादावुपस्पृशन् ॥**
**नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया॥३३॥**

१ पाद–पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् । म०

१ पद्–पुं०, अङ्घ्रि–पुं०, चरण–पुं०, न०

२ स्पृश—स्पृशति स्पर्शने षष्ठे उपस्पृशति आचमे।
सेवाजलस्पर्शयोश्च, दाने स्पर्शयति द्वयोः॥ ना०क्रि०
३ ग्राम—समौ संवसथग्रामौ वेश्म भूर्वास्तुरस्त्रियाम्। पु०
तद् २–३, काम २३–४, नञ् ४–५, आप् २७–८, एव ७–३, राम ८–३, नन्दि ग्रामविशेषनाम, कृ २–११, राजन् २१–१, गम् १६–२, काङ्क्षा २३–४। सः राज्यम् अकरोत् सक० प्रयोगः।
सः—द० पुं० 'तद्' श० प्र० ए० कर्तृपदम्।
कामम्—अ० पु० 'काम' श० द्वि० ए० ल्यबन्तकर्म।
अनवाप्य—ल्यबन्तमव्ययम्।
एव—अवधारणार्थकमव्ययम्।
रामपादौ—अ० पु० 'रामपाद' श० द्वि० द्वि० स्पृशेः कर्म।
उपस्पृशन्-त० पु० 'उपस्पृशत्' श० प्र० ए० कर्तृवि० वि०
नन्दिग्रामे-अ० पु० 'नन्दिग्राम' श० स० ए० औप० अधि०
अकरोत्-त० उ० करणार्थक 'कृ' धा० कर्त० लङ्० प्र० ए० क्रि०
राज्यम्—अ० न० 'राज्य' श० द्वि० ए० कर्म।
रामागमनकाङ्क्षया—आव० स्त्री० 'रा–क्षा' श० तृ० ए० हेतुपदम्।

---

१ स्पृश संस्पर्शने, तु० प०  २ वेश्मन् न०
३ भू–स्त्री, वास्तु–पुं० न०

सः भरतः कामं मनोरथम् अनवाप्य अप्राप्य एव रामपादौ रामस्य पादौ पादुके-दौ ( ष० त० ) उपस्पृशन् सेवमानः सन् रामागमनकाङ्क्षया रामस्य आगमनं-नं ( ष० त० )-नस्य काङ्क्षा इच्छा-काङ्क्षा ( ष० त० ) तया-काङ्क्षया नन्दिग्रामे नन्दिनामके ग्रामे राज्यं राज्ञः नृपस्य कर्म राज्यं प्रजापालनादि अकरोत् चकार ॥ ३३ ॥

गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ॥
रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ।
तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥३४॥

१ इन्द्रिय-श्रोत्रं त्वङ्नेत्रजिह्वे च घ्राणं ज्ञानेन्द्रियाणि च ।
शब्दः स्पर्शो रूपरसौ गन्धस्तद्विषयाः स्मृताः ॥
पायूपस्थं पाणिपादौ वाक् कर्मेन्द्रियपञ्चकम् ।
उत्सर्ग आनन्दाऽऽदानगत्यालापाश्च तत्क्रियाः ॥
द्विविधं तु मनः प्रोक्तं हृषीकं विषयीन्द्रियम् । धी०
२ लक्ष—दर्शनाङ्कनयोर्लक्षयति लक्षयते तथा ।
आलोचने लक्षयते आत्मने केवले स्मृतः ॥

---

१ त्वच्-स्त्री० २ जिह्वा—स्त्री० ३ पायु-पुं०
४ वाच्--स्त्री० ५ गति-स्त्री० ६ मनस्-न०
७ लक्ष दर्शनाङ्कनयोः, चु०उ० ८ लक्ष आलोचने, चु० आ०

स्याद्बोधने लक्षणया उपलक्षयति द्वयोः ।
वैशिष्ट्येन ज्ञापने तु विलक्षयति च द्वयोः॥ ना० क्रि०
३ नागर—नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे । ना०
४ एकाग्र—एकतानोऽनन्यवृत्तिरेकाग्र्यैकायनावपि ।
अप्येकसर्ग एकाग्रोऽप्येकायनगतोऽपि सः ॥ वि०
५ प्र—आरम्भोत्कर्षमाने प्र नियोगव्यवहारयोः । ना०
६ विश—प्रवेशने विशति च स्यात् संविशति मैथुने ।
शयनेऽथोपविशति स्थितौ निर्विशतीति तु ॥
भृतिदाने तथा भोगे परिविशति तु स्मृतः ।
परिवेषेऽथाऽऽग्रहे चाभिनिविशत आत्मने ॥ ना०क्रि०

गम् १६–२, तु २९–१, भरत विशेपनाम, श्रीमत् ९–४, सत्य २–१२, सन्धा १२–१, जित ४–२, राम ८–३, पुनः ३२–३, आङ् १०–५, जन ८–६, च २–७, तद् २–३, दण्डक अरण्यविशेषनाम, ह २३–३ । रामः दण्डकान् प्रविवेश सक० प्र० ( इतः प्रभृति विभक्त्यर्थनिर्देशो न लिख्यते विद्यार्थिभिः सुज्ञेयत्वात्, तथैवानुभवात् । )

भरते गते याते सति श्रीमान् प्रतिज्ञाभङ्गभयजनितविषादापगमात् मनोज्ञः सत्यसन्धः सत्या भरताग्रहेऽ

१ एकाग्र्य पुं० न० —ग्र्या स्त्री० २ विश प्रवेशने तु० प०

पि न च्युता सन्धा प्रतिज्ञा यस्य सः—न्धः ( ष० ब० ) जितेन्द्रियः जितानि वशीकृतानि इन्द्रियाणि मनःप्रभृतीनि येन सः—यः ( तृ० ब० ) रामः श्रीरामचन्द्रः तत्र भरद्वाजाश्रमे नागरस्य नगरे अयोध्यापुरे भवः उत्पन्नः—रः (त० वृ०) तस्य—स्य जनस्य लोकस्य आगमनं पुनः मुहुः आलक्ष्य दृष्ट्वा एकाग्रः पित्राज्ञापरिपालनैकाचित्तः सन् दण्डकान् दण्डकारण्यानि प्रविवेश प्राविशत् ह निश्चयेन ॥ ३४ ॥

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ३५

१महारण्य—महारण्यमरण्यानी गृहारामास्तु निष्कुटाः।व०
२राजीव—वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।
सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥
पङ्केरुहं तामरसं सारसं सरसीरुहम् ।
विसप्रसूनराजीवपुष्कराऽम्भोरुहाणि च ॥ वा०
३राक्षस -राक्षसःकौणपः क्रव्यात्क्रव्यादोऽस्रप आशरः।
रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ॥
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी । स्व०

१ यातु-न० रक्षस्-न०

४ हन्—हिंसागत्योर्हन्ति¹, गर्वे उद्धन्ति, स्वाङ्गताडने
आहतेऽथावहन्ति स्यादभिहन्त्यपि केवले ॥
पराहतौ पराहन्ति, सङ्घाते परिकीर्तितः।
संहन्त्यथ प्रतीघाते प्रतिहन्ति, विहन्ति तु ॥
अपहन्ति च नाशेऽथ मारणे स्यान्निहन्ति च ।
व्याहन्ति स्यादन्तरायेऽन्याङ्गताडनकर्मणि ॥
आहन्तीत्येव सम्प्रोक्तो द्वितीयेऽयं सकर्मकः । ना०क्रि०
५ तीक्ष्ण—तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके ।
क्लीबं, यवाग्रजे पुंसि, तिग्मात्मत्यागिनोस्त्रिषु ॥ ना०
६ अगस्त्य—अथागस्त्यः कुम्भयोनिरगास्तिः कलशीसुत
मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी । दि०

प्र ३४—५ विश् ३४—६ तु २९—१ राम ८—३
लोचन ११—७ विराध राक्षसनाम, शरभङ्ग ऋषिनाम, द
३—१० ह २३—३ सु १०—७ च २—७ अपि २५—
भ्रातृ २३—२ तथा २५—६

रामः शरभङ्गं सुतीक्ष्णम् अगस्त्यम् अगस्त्यभ्रात
( च ) ददर्श सक० प्र०

रामः श्रीरामचन्द्रः महारण्यं महावनं प्रविश्य
राजीवलोचनः राजीवे वनवैचित्र्यदर्शनेन विकसितकमल

¹ हन हिंसागत्योः अ० प०

सहशे लोचने नेत्रे यस्य सः–नः ( ष० व० ) सन् विराधं विराधनामकं राक्षसं निशाचरं हत्वा मारयित्वा शरभङ्गं शरभङ्गनामकमृषिं सुतीक्ष्णं सुतीक्ष्णनामकं चापि अगस्त्यं अगस्तिऋषिं च तथा एवम् अगस्त्य-भ्रातरं अगस्त्यस्य अगस्तिऋषेः भ्राता अनुजः–ता ( ष० त० ) तं–रं सुदर्शनं ददर्श अवलोकयामास ह ऐतिह्ये ॥ ३५ ॥

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ॥३६॥

१ ग्रह–क्र्यादौ गृह्णाति गृह्णीते उपादानेऽथ सङ्ग्रहे ।
सङ्गृह्णात्याग्रहे तूक्त आगृह्णाति प्रतिग्रहे ॥
प्रतिगृह्णाति सम्प्रोक्तः परिगृह्णाति च स्मृतः ।
विरोधे च पृथक्कारे विगृह्णाति मतो बुधैः ॥
पृथक्त्वेऽप्यवगृह्णाति वृष्टिबन्धनकर्मणि ।
निगृह्णाति निरोधे स्यात्तिरस्कारे च निश्चये ॥
कृपायामनुगृह्णाति नमस्कारे तु कीर्तितः ।
उपसर्म्पूर्वकश्चैते द्वयोः स्युः पदयोर्मताः ॥ ना० क्रि०
२ इन्द्र–इन्द्रो मरुत्वान्मघवा विडौजाः पाकशासनः ।

१ ग्रह उपादाने क्र्या० उ०
२ मरुत्वत्–पु; मघवन् पु०, बिडौजस् पु०

## १२. मूलरामायणप्रकाशो (३६) श्लोकः

वृद्धश्रवाः[1] सुनासीरः पुरुहूतः पुरन्दरः ॥
जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।
सुत्रामा[2] गोत्रभिद्वज्री वासवो वृत्रहा[3] वृषा ॥
वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।
जम्भभेदी[4] हरिहयः स्वाराण्नमुचिसूदनः[5] ॥
सङ्क्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः[6] ।
आखण्डलः सहस्राक्ष ऋभुक्षास्तस्य[7] तु प्रिया ॥
पुलोमजा शचीन्द्राणी नगरी त्वमरावती । स्व०
३ खड्ग—तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः ।
तूण्यां[8], खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः ॥
कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ॥ क्ष०
४१रम—परमं त्रिषुचोत्कृष्टेऽप्यत्यन्तेऽथमतेऽव्ययम् । ना
५ क्षय—क्षयो गेहे च कल्पान्ते रोगापचययोरपि ॥ ना
६सायक-पद्ये यशसि च श्लोकः,शरे खड्गे च सायकः॥

अगस्त्य ३५—६, वचन १—५, च २—७, ७—३, शरासन १०—२, प्रीत ६—५, तूणी ३६— नञ् ४—८,

---

१ वृद्धश्रवस्—पु० १ सुत्रामन्—पु; गोत्रभिद्—पु०, वज्रिन्—पु०
३ वृत्रहन्—पु०, वृषन्—पु० ४ जम्भभेदिन्—पु०
५ स्वाराज्—पु० ६ तुरासाह्—पु०
७ ऋभुक्षस्—पु० ८ तूणी पु०,—स्त्री०

सः शरासनं खड्गं तूणी ( च ) जग्राह सक० प्र०
परमप्रीतः परमः अत्यन्तश्चासौ प्रीतः सन्तुष्टश्च
-तः ( वि०पू०क० ) श्रीरामचन्द्रः अगस्त्यवचनात्
अगस्त्यस्य अगस्तिऋषेः वचनं वाक्यं-नं ( ष० त० )
तस्मात्-नात् हेतोः ऐन्द्रम् इन्द्रस्य शक्रस्य इदम् ऐन्द्रं
( त० वृ० )शरासनं शराःबाणाः अस्यन्ते क्षिप्यन्ते अनेन
तत्-नं ( उ० स० ) खड्गम् असिम् अक्षयसायकौ
अक्षयाः सहस्रशो विनियोगेऽपि क्षयरहिताः सायकाः
बाणाः ययोस्तौ-कौ ( ष० व० ) तूणी निषङ्गौ च
जग्राह आददे ॥ ३६ ॥

**वसतस्तस्य रामस्य वने वनचरैः सह ।**
**ऋषयोऽभ्यागमन् सर्वे वधायासुररक्षसाम्॥३७॥**

१चर-गतौ भक्षे च चरति सेवने तु परेः स्मृतः ।
शब्दमेहनयोश्चापिउदोऽथोपात्तु पूजने ॥
अहराश्यन्तरगतावतेः परोऽप्यतिक्रमे ।
अपात्परस्तु नाशे स्यात् प्रपूर्वो व्यापने स्मृतः ॥
भ्रमणे संपरश्चाथ करणे आङ्परः स्मृतः ।
अभेः परोऽभिचारे संशये चारयति द्वयोः ॥
विपूर्वस्तु विचारे चर् प्रथमे दशमे स्मृतः । ना० क्रि०

१ चर गतिभक्षणयोः भ्वा० प०     २ चरसंशये चु० उ०

२सह–कदाचिज्जातु, सार्धं तु साकं सत्रा समं सह।
३असुर- असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः।
शुक्रशिष्या दितिसुताः पूर्वदेवाः सुरद्विषः ॥
वस् २०–९, तद् २–३, राम ८–२, वन २१-
ऋषि ५–८, गम १६–२, सर्व ३–३, वध ९-
रक्षस् ३५–३।

ऋषयः अभ्यागमन् अक० प्र०

वनचरैः वने अरण्ये चरन्ति गच्छन्ति ते–राः(उ
स०) तैः–रैः सह सर्वे सम्पूर्णाः ऋषयः अगस्त्याद
आसुररक्षसाम् असुरस्य दैत्यस्य इमानि आसुर
(त० वृ० )–णि दैयप्रभृतीनि च तानि रक्षांसि राक्षस
–क्षांसि ( वि०पू०क०) तेषां–सां वधाय नाशं कारयि
वने अरण्ये वसतः तस्य पूर्वोक्तस्य रामस्य श्रीराम
न्द्रस्य अभ्यागमन् समीपमाजग्मुः ॥ ३७ ॥

**स तेषां प्रतिशुश्राव राक्षसानां तथा वने**
**प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम्॥**
**ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम्**

१अरण्य–अटव्यरण्यं विपिनं गहनं काननं वनम्।
तद् २–३, श्रु५–२, राक्षस ३५–३, तथा २५-

१ इन्द्रारि–पु० २ सुरद्विष् पु० ३ ल्यब्लोपिचतुर्थ्यन्तम्।

ज्ञा २-१०, च २-७, राम ८-३, वध ९-६, संयत् ४-१०, रक्षस् ३५-३, ऋषि ५-८, अग्नि १८-५, दण्डक विशेषनाम, वस् २०-९।

सः प्रतिशुश्राव अक० प्र०, रामेण वधः प्रतिज्ञातः कर्म० प्र०

सः श्रीरामचन्द्रः वने दण्डकारण्ये तेषाम् अगस्त्यादीनां तथा कथनानुसारेण राक्षसानां निशाचराणां प्रतिशुश्राव वधं स्वीचकार। रामेण श्रीरामचन्द्रेण अग्निकल्पानाम् ईषन्न्यूनाः अग्नयः अग्निकल्पाः ( त० वृ० ) तेषां-नां दण्डकारण्यवासिनाम् दण्डकारण्ये वसन्ति ते, --नः ( उप०स० ) तेषां--नाम् ऋषीणाम् अगस्त्यादीनाम् अग्रे संयति युद्धे रक्षसां राक्षसानां वधः प्रतिज्ञातः निश्चितः च ॥ ३८ ॥

**तेन तत्रैव वसता जनस्थाननिवासिनी।**
**विरूपिता शूर्पणखा राक्षसी कामरूपिणी॥३९॥**

१ वि-वि विशेषे विरोधे च नियमे पादपूरणे। ना०
२ रूप-सरूपकरणे रूपयति रूपयते द्वयोः।
निरूपयति संप्रोक्त ईक्षणे दशमे गणे ॥ ना० क्रि०

---

१ रूप रूपक्रियायाम् चु० उ०

३ शूर्प-प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्।
४ नख-पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्।

तद् २-३, एव ७-३, वस् २०-९, जनस्थ विशेषनाम, राक्षस ३५-३, काम १९-१ तेन राक्ष विरूपिता कर्म० प्र० ।

तत्र जनस्थाने एव वसता वासं कुर्वता ते श्रीरामचन्द्रेण जनस्थाननिवासिनी जनस्थाने निवस सा-नी (उपं० स०) कामरूपिणी कामं यथेच्छं रूप यति सा-णी ( उ० स० ) शूर्पणखा शूर्पवत् नखानि कररुहाः यस्याः सा शूर्पणखा ( ष० ब० ) राक्ष विरूपिता नासाकर्णच्छेदनेन वैरूप्यं प्रापिता ॥ ३९॥

ततः शूर्पणखावाक्यादुद्युक्तान् सर्वराक्षसा
खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥
निजघान रणे रामस्तेषां चैव पदानुगान् ॥४

१ उद्युक्त-तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः।
२ पद-पदं स्थाने विभक्त्यन्ते शब्दे वाक्यैकवस्तुनोः। त्राणे पादे पादचिन्हे व्यवसायापदेशयोः ।

तद् २-३, शूर्पणखा विशेषनाम, वाक्य २-१ सर्व ३-३, राक्षस ३५-३, खर विशेषनाम, त्रि संख्या वाचकं, शिरस् १०-८, च २-७, एव ७-३, दू

नाम, हन ३५–४, रण ४–१०, राम ८–३, अनु २७–३, गम १६–२ ।

रामः खरं त्रिशिरसं दूषणं पदानुगान् च निजघान सक० प्र० ।

ततः नासाकर्णच्छेदनानन्तरं रामः श्रीरामचन्द्रः शूर्पणखावाक्यात् शूर्पणखायाः वाक्यं वचनं–क्यं (ष०त०) तस्मात्–त् उद्युक्तान् युद्धार्थमुत्सुकान् सर्वराक्षसान् सर्वे सम्पूर्णाश्च ते राक्षसाः निशाचराश्च–साः (वि०पू०क०) तान्–सान् राक्षसं राक्षसजातीयं खरं त्रिशिरसं त्रीणि त्रिसङ्ख्याकानि शिरांसि मस्तकानि यस्य सः त्रिशिराः (ष० व०) तं–सम् दूषणं तेषां खरादीनां पदानुगान् पदानि चरणानि अनुगच्छन्ति अनुसरन्ति ते–गाः (उप० स०) तान्–गान् सैनिकान् च रणे युद्धे निजघान मारयामास ॥ ४० ॥

**वने तस्मिन्निवसतां जनस्थाननिवासिनाम् ।**
**रक्षसां निहतान्यासन् सहस्राणि चतुर्दश ॥ ४१ ॥**

वन ३८–१, तद् २–३, वस् २०–९, जनस्थान विशेषनाम, रक्षस् ३९–३, हन् ३५–४, अस् ५–९, सहस्र १८–३, चतुर् दशन् संख्यावाचकौ ।

( रक्षसां ) सहस्राणि आसन् अक० प्र० ।

जनस्थाननिवासिनाम् जनस्थाने निवसन्ति तानि जनस्थाननिवासीनि ( उप० स० ) तेषां–नाम् रक्षसां राक्षसानां चतुर्दश चत्वारि अधिकानि दश–श ( म० लो० स० ) सहस्राणि चतुर्दशसहस्रसङ्ख्याकानि तस्मिन् वने दण्डकारण्ये निवसता वासं कुर्वता श्रीरामचन्द्रेण निहतानि नाशितानि आसन् अभवन् ॥ ४१ ॥

**ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्च्छितः।**
**सहायं वरयामास मारीचं नाम राक्षसम् ॥४२॥**

१मूर्च्छित–विविक्तौ पूतविजनौ, मूर्च्छितौ मूढसोच्छ्रयौ॥ना
२ सहाय–अनुप्लवः सहायश्चानुचरोऽभिचरःसमाः।अ
३ वृ–वृणोति वृणुते प्रोक्तो वरणे पञ्चमे गणे ।
वृणीतेऽयं तु संभक्तावात्मने चाष्टमे गणे ॥
तेजोनाशे विरक्तौ च कृन्मात्रे निर्वृतं त्रिषु ।
आच्छादने वारयति द्वयोरथ निवारणे ॥
नेरपश्च परोऽयं वै सर्वे आङः पराः स्मृताः ।
आच्छादनेऽथ सम्पूर्वाः संवारेऽथ प्रकाशने ॥
विपूर्वा हि विकासेऽपि व्याख्यानेऽथ परेः पराः ।

१ वृञ् वरणे, स्वा० उ०
१ वृञ् आवरणे, चु० उ०
२ वृङ् संभक्तौ, क्र्या० आ०

ज्ञातिगोत्रैः संवरणे, प्रावरे तु प्रआङ् पराः ॥ ना० क्रि०

तद् २-३, ज्ञाति १४-२, वध ९-६, श्रु ५-३, रावण विशेषनाम, क्रोध ४-३, मारीच विशेषनामं, नामन् ८-४, राक्षस ३५-३ ।

रावणः राक्षसं वरयामास सक० प्र० ।

ततः राक्षसवधानन्तरं ज्ञातिवधं ज्ञातीनां खरादि-बान्धवानां वधः नाशः—धः ( ष० त० ) तं-धं०श्रुत्वा शूर्पणखामुखेन आकर्ण्य क्रोधमूर्च्छितः क्रोधेन कोपेनं मूर्च्छितः—तः ( तृ० त० ) रावणः दशाननः मारीचं नाम मारीचनामकं राक्षसं निशाचरं सहायम् अनुचरं वरयामास ॥ ४२ ॥

**वार्यमाणः सुबहुशो मारीचेन स रावणः ।**
**न विरोधो बलवता क्षमो रावण तेन ते ॥४३॥**

वृ ४२-३, सु १०-७, बहु ७-१, मारीच नाम, तद् २-३, रावण नाम, न २९-३, विरोध २८-२, बल २९-४, क्षम १८-६, युष्मद् ५-२ ।

मारीचेन रावणः वार्यमाणः कर्म० प्र० । विरोधः अस्ति अक० प्र० ।

मारीचेन मारीच नामकराक्षसेन हे रावण हे

दशानन बलवता बलं सामर्थ्यं विद्यते यस्य सः बल
(त०वृ०) तेन–ता तेन श्रीरामचन्द्रेण सह ते तव विरो
विद्वेषः न क्षमः न योग्यः इति सः प्रसि
रावणः दशाननः सुबहुशः मुहुर्मुहुः वार्यमाणः प्र
षिध्यमानः ॥ ४३ ॥

**अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ।**
**जगाम सहमारीचस्तस्याश्रमपदं तदा ॥४४॥**

१ दृ–संमन्यते[1] त्वाद्रियते[2] संभावयति[3] मूर्क्षति[4] ।
सत्करोत्यादरे[5] पुस्तयति[6] बुस्तयति[6] द्वयोः ॥ त्र० कि
२ काल–कालो मृत्यौ महाकाले ना
३ चुद–सुवति[7] क्षिप्यति[8] प्रेरयती[9]लति[10] कुपुभ्यति[11] ।
तुदति[12] क्षिपतीत्येतौ[13] केलयत्यात्मनेऽपि[14] च ॥

---

१ मन ज्ञाने, दि० आ०

२ दृङ् आदरे तु० आ० नित्यमाङ्पूर्वः । ३ भू अवकल्कने, चु० उ० ४ आदरे भ्वा० प० ५ डुकृञ् करणे त० उ० ६ पुस्त, बुस्त आदरानादरे चु० उ०

७ षू प्रेरणे, तु० प० ८ क्षिप प्रेरणे दि० प० ९ ईर क्षेपे चु० उ० प्रायः
१० इल स्वप्नक्षेपणयोः, तु० प० ११ कुपुभ क्षेपे, कं० प०
१२ तुद प्रेरणे, तु० प० १३ क्षिप प्रेरणे तु० प०
१४ किल प्रेरणे, चु० उ०

डिपंत्येवं क्षपंयति लाभंयत्यपि डिप्यति।
चोदंयत्यप्येलयंति प्रेरणेऽस्यंति विस्यंति ॥ क्ष० क्रि०
४ आश्रम–आश्रमोऽस्त्री च वर्ण्यादौ मुनिस्थाने वने मठे। ना०

नञ् ४–५, तु २९–१, तद् २–३, वाक्य २–१३, गम् १६–२, सह ३७–२, पद ४०–२ तदा १६–१।

रावणः आश्रमपदं जगाम सक० प्र०

कालचोदितः कालेन मृत्युना चोदितः प्रेरितः–तः (तृ० त०) सहमारीचः मारीचेन मारीचनामकराक्षसेन सह वर्तते सः–चः (तृ० त०) रावणः तद्वाक्यं तस्य मारीचस्य वाक्यं वचनं–क्यं (ष०त०) अनादृत्य तिरस्कृत्य तदा तु तस्मिन्नेव काले तस्य श्रीरामचन्द्रस्य आश्रमपदम् आश्रमस्य आवासस्य पदं स्थानं–दं (ष० त०) जगाम ययौ ॥ ४४ ॥

**तेन मायाविना दूरमपवाह्य नृपात्मजौ।**
**जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम्॥४५॥**

१ वह–वहते वहति प्रोक्तः प्रापणे प्रथमे गणे।

१ डिप-क्षेपे तु० प०
२ क्षप प्रेरणे चु० उ०
३ लाभ प्रेरणे चु० उ०
४ डिप प्रेरणे दि० प०
५ चुद संचोदने चु० उ०
६ इल प्रेरणे चु० उ०
७ असु क्षेपणे दि० प०
८ विस प्रेरणे दि० प०
९ वह प्रापणे भ्वा० उ०

कृतावावहति प्राक्तु धारया गमने स्मृतः ॥
वेरुदश्च विवाहेऽथ निचये निवहत्यपि ।
संवाहयति सेवायां निर्वाहयति तु स्मृतः ॥
कार्यसिद्धिप्रदे यत्ने ऽपाद् दूरनयने स्मृतः । ना० क्रि०

२ नृप-राजा राट् पार्थिवः क्ष्माभृत् नृपभूपमहीक्षितः । क्ष

३ हृ-हरणे हरति प्रोक्तो हरते प्रथमे गणे ।
उक्तौ व्याहरति, प्राक्तु ताड़ने, वर्जने परेः ॥
अभ्यवाभ्यां भक्षणे स्यादाहरत्यपि, खेलने ।
वेः परोऽथ समाभ्यां च संक्षेपेऽनुकृतौ त्वयम् ॥
अनोः परो नाशने तु संपूर्वो, हरणे बलात् ।
अपपूर्व, उदस्तु स्यान्मग्ननिःसारणे ह्ययम् ॥
उपायने उपादग्रे, श्मशाने नयने निरः ॥ ना० क्रि०

४गृध्र-आतापिचिल्लौदाक्षाय्यगृध्रौकीरशुकौसमौ । [illegible]

तद् २-३, माया २४-९, दूर २९-८, आत्म २८-१, भार्या २०-३, राम ८-३, हन् ३५-४ जटायुष् विशेषनाम ।

रावणःभार्यां जहार सक० प्र०

रावणः मायाविना माया सुवर्णमृगस्वरूपधारणात्मकमाया विद्यते यस्य सः—वी (त० वृ०) [illegible]

---

१ हञ् हरणे भ्वा० उ०

–ना तेन मारीचेन नृपात्मजौ नृपस्य दशरथस्य आत्मजौ पुत्रौ–जौ ( ष० त० ) रामलक्ष्मणौ दूरम् अपवाह्य अपनीय जटायुषं जटायुनामकं गृध्रं हत्वा मारयित्वा रामस्य श्रीरामचन्द्रस्य भार्यां धर्मपत्नीं सीतां जहार हृतवान् ॥ ४५ ॥

**गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ।**
**राघवः शोकसन्तप्तो विललापाकुलेन्द्रियः॥४६॥**

१सन्तप्त-सन्तापितसन्तप्तौ धूपितधूपायितौ च दूनश्च।वि०
२आकुल-ऋजावजिह्मप्रगुणौव्यस्तेत्वप्रगुणाऽऽकुलौ।वि०

गृध्र ४५–४, च २–७, हन् ३५–४, दृश् ३–१०, हृ ४५–३, श्रु ५–३, मिथिला विशेषनाम, रघु विशेषनाम, शोक २८–२, लप् २८–५, इन्द्रिय ३४–१ ।

राघवः विललाप अक० प्र० ।

निहतं मृतप्रायं गृध्रं जटायुषं दृष्ट्वा अवलोक्य मैथिलीं मिथिलस्य मिथिलदेशाधिपतेर्जनकस्य अपत्यं स्त्री मैथिली ( त० वृ० ) तां–लीं हृतां रावणेनापहृतां श्रुत्वा जटायुमुखेन आकर्ण्य च शोकसन्तप्तः शोकेन शोकानलेन सन्तप्तः–प्तः ( तृ० त० ) आकुलेन्द्रियः आकुलानि व्याकुलानि इन्द्रियाणि मनःप्रभृतीनि यस्य

---

१ हृतां श्रुधातोः कर्मविधेयविशेषणम् ।

सः —यः ( ष० ब० ) राघवः रघोः गोत्रापत्यं पुमान्
—वः श्रीरामचन्द्रः विललाप परिदिदेव ॥ ४६ ॥

ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् ।
मार्गमाणो वने सीतां राक्षसं स ददर्श ह ॥
कबन्धं नामरूपेण विकृतं घोरदर्शनम् ॥ ४७ ॥

१दह–दहति[1] श्रेषति[2] श्लेषत्यपि प्रोषति चूर्यते[3] ।
तापयत्योषति[4] तर्पत्यपि प्लुष्यति[6] कुण्डते[7] ॥
दाहे कूटयते[8] प्लोषत्यमी, तत्र तु गर्हिते ।
दन्दह्यते दन्दहीति दन्दग्धीति पदत्रयम् ॥ शू० क्रि०
२मार्ग–मार्गयत्यञ्चति[9] गवेषयत्यन्वीक्षते[10][11] ऽपि च ॥
अन्वेषणे मृगयते[12] मृग्यतीत्यपि[13] केचन ॥ वै० क्रि०
३कबन्ध–कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् । क्ष०
४विकृत–हासो हास्यं च वीभत्सं विकृतं त्रिष्विदं द्वयम् ।

---

१ दह भस्मीकरणे, भ्वा० प०
२ श्रिषु श्लिषु प्रुषु प्लुषु दाहे, भ्वा० प०
३ चूरी दाहे, दि० आ०
४ तप दाहे चु० उ० णिज्विकल्पः ।
५ उष दाहे भ्वा० प०
६ प्लुष दाहे, प्लुष च, दि० प०
७ कुडि दाहे भ्वा० आ०
८ कूट आप्रदाने, अवसादने इत्येके, चु० आ०
९ मार्ग अन्वेषणे चु० उ० विभाषितणिच् ।
१० गवेष मार्गणे, चु० उ०
११ ईक्ष दर्शने भ्वा० आ० अनुपूर्वः ।
१२ मृग अन्वेषणे, चु० आ०
१३ मृग अन्वेषणे कं० उ०

विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥
दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।
भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ नाख्य०
तद् २-३, एव ७-३, शोक २८-२, गृध्र ४९ -४, वन २९-१, सीता २५-४, राक्षस ३५-३, दृश् ३-१०, ह २३-३, नामन् ८-४, रूप ३४-१ ।

सः राक्षसं ददर्श सक० प्र० ।

ततः तस्मिन्नेव क्षणे 'रावणेन सीता अपहृता' इति निवेद्य मृतं जटायुषं जटायुनामकं गृध्रं तेन गृध्रमरणसीताऽपहरणजन्येन शोकेन शोकानलेन एव दग्ध्वा दाहविधिना संस्कृत्य वने अरण्ये सीतां जानकीं मार्गमाणः अन्विष्यमाणः सः श्रीरामचन्द्रः नामरूपेण[2] नाम अभिधानं च रूपं स्वरूपं च अनयोः समाहारः—पं ( स० द्व० ) तेन—पेण विकृतं बीभत्सम् अत एव घोरदर्शनं घोरं भयानकं दर्शनं शरीरं यस्य सः—नः ( ष० व० ) तं—र्शनं कबन्धं शिरोरहितं राक्षसं निशाचरं ददर्श अवलोकयामास ह ॥४७॥

तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः ।
स चास्य कथयामास शबरीं धर्मचारिणीम् ।
श्रमणीं धर्मनिपुणामभिगच्छेति राघव ॥४८॥

१ उग्र पुं०, न०, उग्रा स्त्री० २ कबन्धनाम्ना शिरोराहित्येन च बीभत्समित्यर्थः ।

१ शबर-भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः।
२ श्रम्-तपस्याखेदयोः श्राम्यत्याङ्पूर्वो वास ईरितः
विश्राम्यति तु विश्रान्तौ चतुर्थे गण ईरितः।
३ निपुण-प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः

तद् २-३, हन् ३५-४, महत् ९-७, बाहु ९-८, दह ४७-१, स्वर् २८-४, गम् १६-२, २-७, इदम् २-३, कथ ६-६, धर्म २-९, ३७-१, इति ६-३, रघु नाम।

महाबाहुः तं ददाह सक० प्र०। सः स्वः गतः सक० प्र०। सः इति कथयामास सक० प्र०।

महाबाहुः महान्तौ कबन्धभुजकर्तनक्षमौ बाहू भुजौ यस्य सः-हुः ( ष० ब० ) श्रीरामचन्द्रः तं कबन्धं निहत्य मारयित्वा ददाह दग्धवान्। सः कबन्धः स्वः स्वर्गं गतः। सः कबन्धः च हे राघव धर्मचारिणीं धर्मं पतिशुश्रूषारूपधर्मं चरति आचरति -णी ( उप० स० ) तां-णीं श्रमणीं श्राम्यति तपस्यति सा—णी ( कृ० वृ० ) तां-णीं साध्वीं धर्मनिपुणां धर्मे अतिथिसत्काररूपाद्याचारे निपुणा तत्परा-णा ( स०

१ श्रमु तपसि खेदे च, दि० प०

त०) तां—णाम् शवरीं किरातजातीयां स्त्रियम् अभिगच्छ उपगच्छ इति एवंप्रकारेण अस्य श्रीरामचन्द्रस्य कथयामास उवाच ॥ ४८ ॥

सोऽभ्यगच्छन्महातेजाः शवरीं शत्रुसूदनः ॥
शबर्या पूजितः सम्यग् रामो दशरथात्मजः॥४९॥

१ तेजस्—नवनीते प्रभावेऽग्नौ तेजस्त्विड्रेतसोर्बले । ना०

२ सूद—हिनस्ति संज्ञपयति सूदते हन्ति तर्दति ।
प्रमापयत्यर्दयति निर्वापयति रिष्यति ॥
तृणेढि मारयति च श्लथत्यर्वति गूर्यते । क्ष०क्रि०

३ पूजित—ज्ञप्तस्तु ज्ञपिते च्छन्नश्छादिते पूजितेऽञ्चितः।

४ सम्यच्—सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति । वि०

तद् २—३, गम् १६—२, महत् ५—७, शवर ४८—१, शत्रु ९—५, राम ८—३, दशरथ विशेषनाम, आत्मज २८ १ ।

---

१ तृह हिसि हिंसायाम्, रु० प०   २ ज्ञप मिच्च, चु० उ० संपूर्वः ।
३ षूद क्षरणे, भ्वा० आ०   ४ हन हिंसागत्योः, अ० प०
५ तर्द हिंसायाम्, भ्वा० प०
६ मीञ् हिंसायाम्, क्र्या० उ० प्रपूर्वो णिजन्तः ।
७ अर्द हिंसायाम्, चु० उ० ८ डुवप् बीजसन्ताने भ्वा० प० निर्पूर्वः ।
९ रुष रिष हिंसायाम् दि० प०
१० मृङ् प्राणत्यागे णिजन्तः । ११ श्रथ श्लथ क्रथ क्लथ हिंसार्थाः, भ्वा० प०
१२ अर्व शर्व षर्व हिंसायाम्, भ्वा० प० १३ धूरी गूरी हिंसायाम्, दि० आ०

सः शवरीम् अभ्यगच्छत् सक० प्र० । शवर्या रा
पूजितः कर्म० प्र० ।

महातेजाः महत् विपुलं तेजः प्रभावो यस्य सः-ज
( ष० व० ) शत्रुसूदनः शत्रुं रिपुं सूदयति नाशय
सः-नः ( उप० स० ) सः श्रीरामचन्द्रः शवरी
अभ्यगच्छत् समीपं प्राप । शवर्या दशरथात्मज
दशरथस्य आत्मजः पुत्रः-जः ( ष० त० ) रामः श्रीराम
चन्द्रः सम्यक् उत्तमप्रकारेण पूजितः अर्चितः ॥ ४९

पम्पातीरे हनुमता सङ्गतो वानरेण ह ।
हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५०

१ वानर–कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वनौका अथ भल्लुके ।
ऋक्षाऽच्छभल्लभल्लूका, गण्डके खड्गखड्गिनौ ॥

२ सम्–समव्ययं त्वाभिमुख्ये सम्यक्त्वे वाक्यपूरणे ।

पम्पा विशेषनाम, तीर २६–५, हनुमत् वि
नाम, गम् १६–२, ह २३–३, वचन १–५, च २
एव ७–३ सुग्रीव विशेषनाम ।

रामः सङ्गतः अक० प्र०। रामः समागतः अक०

१ वनौकस् पुं०

रामः पम्पातीरे पम्पायाः पम्पानामकपद्मसरसः तीरं तटं–रं ( ष० त० ) तस्मिन्–रे हनुमता हनुः विद्यते यस्य सः हनुमान् ( त० वृ० ) तेन–ता वानरेण मर्कटेन सङ्गतः ह विस्मयः । रामः हनुमद्वचनात् हनुमतः वचनं वाक्यं–नं ( ष० त० ) तस्मात्–नाद् हेतोः एव सुग्रीवेण सुग्रीवनामककपिराजेन समागतः सम्मिलितः च ॥ ५० ॥

**सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः ।**
**आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥५१॥**

१आदि–पुंस्यादिः पूर्वपौरस्त्यप्रथमाऽऽद्याअथास्त्रियाम् ।
अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः ॥ वि०
२ वृत्त–वृत्तं पद्ये चरित्रे, त्रिष्वतीते दृढनिस्तले । ना०
३ शिष्—विशेषणे शिनष्टि स्यादथ शेषयति द्वयोः ।
असाकल्येनोपयोगे शेषतीति तु हिंसने ॥
साकल्ये तु निरः प्रोक्तावन्त्यौ शेषे परेः स्मृतौ ।
विशेषे तु विपूर्वाश्च सर्वेऽमी धातवः स्मृताः ॥ ना०क्रि०

सुग्रीव नाम, च २–७, तद् २–३, सर्व ३–२, शंस् ६–६, राम ८–३, महत् ५–७, बल २९–४,

---

१ शिष्लृ विशेषणे, रु० प०
२ शिष असर्वोपयोगे चु० उ०     ३ शिष—हिंसार्थाः, भ्वा० प०

यथा २५-६, सीता २९-४।

रामः तत् शंसत् सक० प्र०।

महाबलः महत् विपुलं बलं सामर्थ्यं यस्य सः— (षं० ब०) रामः श्रीरामचन्द्रः आदितः स्वजन्मप्रभृ सर्वं सकलं तद् वनप्रस्थानादि विशेषतः विशेषरूपे सीतायाः च रावणकृतापहारान्तं यथावृत्तं वृत्तम् अतीत अनतिक्रम्य वर्तते तद् यथावृत्तम् ( अव्य० स० ) त वृत्तं सुग्रीवाय कपिराजाय शंसत्[1] अकथयत् ॥ ५१॥

सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः।
चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम्॥५

१ सख्य-सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम्।

च २-७, अपि २५-५, तद् २-३, स ३-३, श्रु ९-३, राम ८-३, वानर ५ -१, कृ २-११, प्रीत ६-५, एव ७-३, अ १८-९, साक्षिन् प्रसिद्धार्थकम्।

सुग्रीवः सख्यं चकार सक० प्र०।

वानरः कपिराजः सुग्रीवः चापि रामस्य श्रीराम चन्द्रस्य सर्वं सकलं तद् वृत्तं श्रुत्वा आकर्ण्य प्रीत

१ आर्षत्वादड़भावः।

सन्तुष्टः सन् रामेण श्रीरामचन्द्रेण सह अग्निसाक्षिकम् अग्निः वह्निः साक्षी यस्य तत्—कं (ष० ब०) सख्यं मैत्रीं चकार अकरोत् ॥ ५२ ॥

**ततो वानरराजेन वैरानुकथनं प्रति ।**
**रामायावेदितं सर्वं प्रणयाद् दुःखितेन च ॥५३॥**

१ प्रति—प्रतिदाने प्रतिनिधौ वीप्सालक्षणयोः प्रति ।
इत्थंभूतकथायां च भागेऽपि च प्रयोगतः ॥ ना०

२ प्रणय—सङ्घाते सन्निवेशे च संस्त्यायः, प्रणयास्त्वमी ।
विस्रम्भयाच्ञाप्रेमाणो, विरोधे तु समुच्छ्रयः ॥ ना०

३ दुःख—पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ।
स्यात् कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत् । नाम्य०

तत् २–३, वानर ५०–१, राजन् २१–१, वैर २८–२, अनु २७–७, कथ ६–६, राम ८–३, विद् १–६, सर्व ३–३, च २–७ ।

वानरराजेन सर्वम् आवेदितं कर्म० प्र० ।

ततः सख्यकरणानन्तरं दुःखितेन दुःखं संजातं मित्रप्राप्त्योद्‌बुद्धं यस्य सः-तः (त० वृ०) तेन -न वानरराजेन वानराणां कपीनां राजा—जः (ष० त०) तेन—जेन वैरानुकथनं वैरस्य विद्वेषस्य

अनुकथनं वैरानुकथनं प्रति सर्वं सम्पूर्णं वालिकृ (रहस्यं) प्रणयाद् विश्वासाद् रामाय श्रीरामचन्द्राय आवेदितं कथितम् ॥ ५३ ॥

**प्रतिज्ञानं च रामेण तदा वालिवधं प्रति ।**
**वालिनश्च बलं तत्र कथयामास वानरः ॥५४॥**

प्रतिज्ञा २२-३, च २-७, राम ८-३, तदा १६-१, वालिन् विशेषनाम, वध ९-६, प्रति ५३-१, बल २९-४, तद् २-३, कथ ६-६, वानर ५०-१,

रामेण प्रतिज्ञातं भावे प्र०, वानरः बलं कथयामास सक० प्र० ।

रामेण श्रीरामचन्द्रेण च तदा आवेदनसमये वालिवधं वालिनः सुग्रीवज्येष्ठबन्धोः वधः हननं–धः (ष०त०) तं–धं प्रति प्रतिज्ञातं निश्चितम् । तत्र प्रतिज्ञासमये वानरः सुग्रीवः वालिनः स्वज्येष्ठबन्धोः बलम् अरुणोदयानन्तरं सूर्योदयात्प्रागेव रावणं गृहीत्वा चतुःसमुद्रलङ्घनादिरूपं सामर्थ्यं कथयामास ॥ ५४ ॥

**सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ।**
**राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् ॥**
**दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥५५॥**

१ शङ्क–शङ्कायां रगतीति स्याद् रेकते शङ्कते त्रयम्। बु.क्रि.
२ प्रत्यय–प्रत्ययः शपथे रन्ध्रे विश्वासाचारवस्तुषु। ना०
३ पर्वत––अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः।
महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः॥ शै०

च २–७, असू ५–९, नित्य २४–१, वीर्य २–८, राघव ८–३, अर्थ १५- २, तु २९–१, दुन्दुभि विशेष-नाम, काय ११–३, उत्तम २५–२, दृश् ३–१०, महत् ५–७, सम् ५०–२ निभ ११–१।

सुग्रीवः आसीत् अ० प्र०। सुग्रीवः कायं दर्शयामास सक० प्र०।

सुग्रीवः वानरराजः राघवे श्रीरामचन्द्रे नित्यं सदा वीर्येण पराक्रमेण शङ्कितः शङ्कायुक्तः आसीत् अभूत् च। सुग्रीवः वानरराजः राघवप्रत्ययार्थं राघवस्य श्रीरामचन्द्रस्य प्रत्ययः विश्वासः–यः (ष० त०)–याय इति–र्थं (च० त०) दुन्दुभेः दुन्दुभिनामकराक्षसस्य महापर्वतसन्निभं महान् श्रेष्ठश्चासौ पर्वतः अद्रिश्च–तः तेन सन्निभः

---

१ रगे शङ्कायाम्, भ्वा० प०  २ रेकृ शङ्कायाम्, भ्वा० आ०
३ शकि शङ्कायाम्, भ्वा० आ०  ४ शिखरिन्, पु०

तुल्यः—भः ( तृ० त० ) तं—भम् उत्तमं श्रेष्ठं कायं श-
रीराकारास्थि दर्शयामास ॥ ५५ ॥

उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम् ॥५६

१स्मि—स्मयते त्वल्पहासेऽथाश्चर्ये विस्मयते इति। ना० क्रि०
२ईक्ष—ईक्षते दर्शने भ्वादौ संकल्पेऽप्युदीक्षते ।
उत्प्रेक्षते वितर्केऽथ, गुणदोषावलोकने ॥
परीक्षते, ह्यथेच्छायामपेक्षत, उपेक्षते ।
औदासीन्येऽथ स्वेष्टस्य मार्गालोके प्रतीक्षते ॥
निरीक्षते निरीक्षायां प्रोक्त ईक्ष सकर्मकः । ना० क्रि०
३अस्थि स्यात्कर्परःकपालोऽस्त्री कीकसं कुल्यमस्थि च।
४ अङ्गुष्ठ-अङ्गुल्यःकरशाखाःस्युःपुंस्यङ्गुष्ठःप्रदेशिनी ।
मध्यमाऽनामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ म०
५ क्षिप—क्षिप्यति प्रेरणे प्रासे क्षिपति क्षिपते तथा ।
समः परौ तु संक्षेपे भ्रान्तौ वेर्भर्त्सने त्ववात् ॥
आरोपे आङ्परौ प्रोक्तावधःक्षेपे त्वपात्परौ ।
ऊर्ध्वं क्षेप उदः प्रोक्तावुपन्यासे उपात्परौ ॥

१ स्मिङ् ईषद्धसने, भ्वा० आ०
२ ईक्ष दर्शने, भ्वा० आ०
३ क्षिप प्रेरणे, दि० प०
४ क्षिप प्रेरणे, त० उ०

न्यासे नेः प्राच्च प्रक्षेपे व्यापूर्वौ तु विलम्बने। ना० क्रि०
६ योजन–परमात्मचतुष्क्रोशयोर्योगे योजनमुच्यते। ना०

महत् ५–७, बाहु ९–८, च २–७, बल २९–४, पाद ३३–१, सं० ५०–२, पूर्ण ३–३, दशन् १९–३,

महाबाहुः अस्थि चिक्षेप सक० प्र०।

महाबलः महत् अपरिमेयं बलं सामर्थ्यं यस्य सः –लः (ष० ब०) महाबाहुः महान्तौ बलानुरूपकार्यकरणसमर्थौ बाहू भुजौ यस्य सः–हुः (ष० ब०) श्रीरामचन्द्रः उत्स्मयित्वा किञ्चिद् हासित्वा प्रेक्ष्य अवलोक्य च पादाङ्गुष्ठेन पादस्य चरणस्य अङ्गुष्ठः–ष्ठः (ष० त०) तेन—न सम्पूर्णम् अन्यूनम् अस्थि दशयोजनं चत्वारिंशत्क्रोशीं चिक्षेप प्रास्यत्॥ ५६॥

**बिभेद च पुनस्तालान्सप्तैकेन महेषुणा।**
**गिरिं रसातलं चैव जनयन्प्रत्ययं तदा॥५७॥**

१ भिदू–छेदे भिनत्ति भिन्तेऽथ उत्पत्तौ खनने तथा।
उदः परो, मेलने तु सम्पूर्वः सप्तमे गणे॥ ना० क्रि०
२ पुनर्–पुनरप्रथमे भेदे चान्यपक्षाधिकारयोः॥ ना०
३ ताल—तालः कालक्रियामाने प्रादेशे हरितालके।

---

१ भिदिर् विदारणे, रु० उ०

तालवृक्षे करस्थाल्यां कथितस्तु मनीषिभिः ॥ ना०

४ इषु—पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ।
कलम्बमार्गणशराः पत्री[1] रोप इषुर्द्वयोः ॥ क्ष०

५ रसातल- अधोभुवनपातालं बलिसद्म[2] रसातलम् ।
नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् । पा०

६ जन—सत्तायामस्ति[3] भवति[4] विद्यते[5] चाथ जन्मनि ।
उत्पद्यते[6] जायते[7] च प्ररोहत्युद्भवत्यपि ॥
निर्वर्तते[10] संभवति[11], सिद्धौ सिद्ध्यति[12] रध्यति[13] ।
निष्पद्यते[14] च राध्नोति[15] साध्नोति फलतीति[16] च । भा०वि०

च २-७, सप्तन् संख्यावाचि, एक ३-८, महत् ५-७, गिरि ५४-३, एव ७-३, प्रत्यय ५४-२, तदा १६-१,

---

१ पत्रिन्, पुं०
२ बलिसद्मन्, न०
३ अस भुवि, अ० प०
४ भू सत्तायाम्, भ्वा० प०
५ विद सत्तायाम्, दि० आ०
६ पद गतौ, दि० आ० उत्पूर्वः ।
७ जनी प्रादुर्भावे, दि० आ०
८ रुहबीजजन्मनि प्रादुर्भावे च, भ्वा० प० परहितोऽपि ।
९ भू उत्पूर्वः ।
१० वृतु वर्तने, भ्वा० आ० निर्पूर्वः ।
११ संपूर्वो भूधातुः ।
१२ षिधु संराद्धौ, दि० प०
१३ रध हिंसासंराध्योः, दि० प०
१४ पद गतौ, दि० आ० निस्पूर्वः ।
१५ राध साध संसिद्धौ, स्वा० प०
१६ फल निष्पत्तौ, भ्वा०प०

सः तालान् विभेद सक० प्र०

श्रीरामचन्द्रः तदा तस्मिन्नेव काले प्रत्ययं विश्वासं जनयन् उत्पादयन् सन् एकेन अद्वितीयेन महेषुणा महान् निश्चलश्चासौ इषुः बाणश्च—षुः (वि० पू० कर्म०) तेन—णा सप्त सप्तसंख्याकान् तालान् पुनः मुहुः विभेद चिच्छेद। गिरिं पर्वतं रसातलं पातालं प्रति च ( इषुम् अगमयत् ) ॥ ५७ ॥

**ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः।**
**किष्किंधां रामसहितो जगाम च गुहां तदा ५८**

१ ततः—यत्तद्यतस्ततो हेतावसाकल्ये तु चित् चन। अ०
२ श्वस—श्वसिति[1] प्राणनेऽदादौ विश्वासे विश्वसित्यपि।
आश्वसित्यथोच्छ्ववसिति देहाद्वायोर्निरासने ॥ ना०क्रि०
३ सहित—समभिव्याहृते युक्ते मिलिते सहितस्त्रिषु। ना०
४ गुहा—दरी तु कन्दरो वाऽस्त्री देवखातबिले गुहा।
गह्वरं, गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ शै०

प्रीत ६-५, मनस् ३४-१, तद् २-३, महत् ५-७, कपि ५० १, किष्किन्धा विशेषनाम, राम ८-३, गम् १६-२, च २-७; तदा १६-१।

---

१ श्वस प्राणने, अ०प०

सः गुहां जगाम सक० प्र० ।

ततः सप्ततालभेदनानन्तरं तेन अस्थिप्रक्षेपतालभेदनरूपकर्मणा विश्वस्तः 'अयं वालिहननक्षमः' इति विश्वासं प्राप्तः प्रीतमनाः प्रीतं सन्तुष्टं मनः अन्तःकरणं यस्य सः—नाः ( ष० व० ) महाकपिः महान् विशालश्चासौ कपिः मर्कटश्च-पिः( वि० पू०कर्म० ) सः सुग्रीवः रामसहितः रामेण श्रीरामचन्द्रेण सहितः युक्तः—तः (तृ०त०) सन् किष्किन्धां किष्किन्धानाम्नीं गुहां दरीं तदा तस्मिन् काले जगाम ययौ ॥ ५८ ॥

**ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः ।**
**तेन नादेन महता निर्जगाम हरीश्वरः ॥५९॥**

१ गर्ज—गर्जनायां स्तनयति गदयत्यपि गर्जति। ध्व० क्रि०

२ हरि—यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांऽशुवाजिषु ।
शुकाहिकपिभेकेषु हरिर्ना, कपिले त्रिषु ॥ ना०

३ हेमन्—स्वर्णं सुवर्णं कनकं हिरण्यं हेमं हाटकम् ।
तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ॥
चामीकरं जातरूपं महारजतकाञ्चने ।
रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ वै०

---

१ स्तन गदी देवशब्दे, चु० उ० २ गर्ज शब्दे, भ्वा० प०
३ हेमन्, न० ४ भर्मन्, न०

४ पिङ्गल-कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ। धी०
५ नाद-शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।
स्वाननिर्घोषनिर्ह्रादनादानिस्वाननिस्वनाः । श०

तद् २-३, वर १-७, महत् ५-७, गम् १६-२, ईश्वर १३-३ ।

सुग्रीवः अगर्जत् अक० प्र० । हरीश्वरः निर्जगाम अक० प्र० ।

ततः किष्किन्धागमनानन्तरं हरिवरः हरीणां कपीनां वरः श्रेष्ठः—रः (ष० त०) हेमपिङ्गलः हेमवत् सुवर्णवत् पिङ्गलः पीतः—लः (उप०पू०क०) सुग्रीवः वानरराजः अगर्जत् गर्जति स्म । हरीश्वरः हरीणां कपीनां ईश्वरः राजा—रः (ष० त०) वाली तेन सुग्रीवकृतेन महता भयङ्करेण नादेन ध्वनिना निर्जगाम निश्चक्रे॥५९॥

**अनुमान्य तदा तारां सुग्रीवेण समागतः ।**
**निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६०॥**

१मन-मन्यते मनुते ज्ञाने स्तम्भे मानयते स्मृतः ।
सम्पूर्वा आदरे, गर्वे त्वभिपूर्वा, अनादरे ॥
अपाद्वाच्च वैमत्येऽथानुज्ञायामनोः पराः । ना० क्रि०

---

१ मन ज्ञाने, दि० आ०
२ मनु अवबोधने, त०आ०
३ मन स्तम्भे, चु० आ०

तदा १६–१, तारा विशेषनाम, सुग्रीव नाम, गम् १६–२, हन् ३५–४, च २–७, तद् २–३, इदम् २–३, शर५७–४, एक ३–८, राघव ८–३ ।

वाली समागतः अक० प्र० । राघवः एनं निजघान सक० प्र० ।

वाली तदा निर्गमनकाले तारां स्वपत्नीम् अनुमान्य सान्त्वयित्वा सुग्रीवेण स्वकनिष्ठबन्धुना समागतः युद्धार्थं मिलितः । तत्र च युद्धकाले एव राघवः श्रीरामचन्द्रः एकेन अद्वितीयेन शरेण बाणेन एनं वालिनं निजघान मारयामास ॥ ६० ॥

ततः सुग्रीववचनाद्धत्वा वालिनमाहवे ।
सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥६१॥

१पद–दिवादौ पद्यते प्राप्तौ ज्ञाने तु प्रतिपद्यते ।
उत्पद्यते तथा निष्पद्यते जन्मन्यथाऽऽपदः ॥
प्राप्तौ विपद्यते चाऽऽपद्यते सम्पद्यते तु हि ।
मृतसद्धौ, शरणप्राप्तौ प्रपद्यत इतीरितः ॥
समाधाने तूपपद्यते, ह्यथाऽभ्युपपद्यते ।
अङ्गीकारे कृपायां, विमतौ विप्रतिपद्यते ॥

१ पद गतौ, दि० आ०

उत्पादयति चोत्पादे प्रतिपादयति द्वयोः ।
दाने नियोगेऽथ गमेऽदन्तः पद्यते इति ॥ ना० क्रि०

ततः ५८-१, सुग्रीव नाम, वचन १-५, हन् ३५-४, वालिन् विशेषनाम, आहव ४-१०, एव ७-३, तद् २-३, राजन् २१-१, राघव ८-२, प्रति ५३-१।

राघवः सुग्रीवं प्रत्यपादयत् सक० प्र० ।

राघवः श्रीरामचन्द्रः ततः वालिवधप्रार्थनारूपाद् सुग्रीववचनात् सुग्रीवस्य वचनं वाक्यं-नं (प० त०) तस्मात्—नात् आहवे युद्धे वालिनं सुग्रीवज्येष्ठ-बन्धुं हत्वा मारयित्वा तद्राज्ये राज्ञः नृपस्य कर्म प्रजा-पालनादि—ज्यं (त० वृ०) तस्य वालिनः राज्यं किष्किन्धास्थप्रजापालनादिकर्म—ज्यं (ष० त०) तस्मिन्—ज्ये सुग्रीवमेव प्रत्यपादयत् न्ययुङ्क्त ॥ ६१ ॥

**स च सर्वान्समानीय वानरान्वानरर्षभः ।**
**दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥६२॥**

१ नी—भ्वादौ नयति नयते नयने, सान्त्वने तु च ।
अनुनयति, स्नेहे तु प्रणयत्यथ निर्णये ॥
निर्णयत्यानये आनयति, दूरापवाहने ।

---

१ पद गतौ, चु० आ०

२ णीञ् प्रापणे, भ्वा० उ०

अपनयति, सान्त्वे तु अनुनयत इत्यथ ॥
नम्रतायां विनयति, परिणयति तु स्मृतः ।
पाणिग्रहेऽथाऽभिनयत्यभिनाये द्वयोरिमे ॥
संमानने केवलोऽयमात्मने वै तथा इमे ।
उत्क्षेपणे उन्नयते ज्ञाने, विनयते व्यये ॥
ऋणनिर्यातनेऽथोपनयते ब्राह्मणस्य च ।
संस्कारे च क्षत्रविशोर्भृतिदानेऽप्युदाहृतः ॥ ना० क्रि०

२दिश्–दिशस्तु ककुभः[1] काष्ठा आशाश्च हरितश्च[2] ताः॥दि०

तद् २–३, च २–७, सर्व ३–३, सं ५०–२, वानर ५०–१, ऋषभ १–१३, स्था १४–६, दृश् ३–१०, जनक विशेषनाम, आत्मज २८–१ ।

सः वानरान् प्रस्थापयामास सक० प्र०

वानरर्षभः वानराणां कपीनां श्रेष्ठः–भः ( ष० त० ) सः सुग्रीवः जनकात्मजां जनकस्य जनकराजस्य आत्मजा पुत्री–जा ( ष० त० ) तां–जां दिदृक्षुः द्रष्टुम् अवलोकयितुम् इच्छुः–क्षुः ( कृ० वृ० ) सन् सर्वान् सम्पूर्णान् वानरान् मर्कटान् समानीय आहूय दिशः चतस्रो दिशः प्रस्थापयामास ॥ ६२ ॥

---

१ ककुभ्, स्त्री०  २ हरित्, स्त्री०

ततो गृध्रस्य वचनात्संपातेर्हनुमान्बली ।
शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥६३॥

१ स्तॄ–स्तृणात्यास्तरणे क्र्यादौ स्तृणीतेऽप्यथ वेः परः ।
विस्तारे, परितो दर्भैः स्थण्डिले तु परेः परः ॥
उपात्परश्च संप्रोक्त उपस्तरणकर्मणि ॥ ना० क्रि०

२ प्लु–प्लवते तु प्लुतगतौ प्लवने तरणेऽपि च ।
आकाशगमनेऽथोपादुपद्रवणकर्मणि ॥
चाञ्चल्ये तु परेः प्रोक्तो विपर्यासे तु वेः परः ।
उदः परः कूर्दनेऽथ स्नाने आङः परः स्मृतः ॥ना० क्रि०

३ लवण–सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ।
सैन्धवोऽस्त्री शीतशिवं मणिमन्थं च सिन्धुजे ॥ वै०

तद् २–३, गृध्र ४५–४, वचन १–५, सम्पाति हनुमत् विशेषनाम, बल २९–४, शत १९–३, योजन ५६–८, अर्णव १६–४ ।

हनुमान् लवणार्णवं पुप्लुवे सक० प्र०

ततः वानरगमनानन्तरं बली बलं सामर्थ्यं विद्यते यस्य सः–ली (त०वृ०) हनुमान् मारुतिः सम्पातेः सम्पातिनामकस्य गृध्रस्य वचनात् कथनात् शतयोजन-

१ स्तृञ् आच्छादने क्र्या० उ०    २ प्लुङ् गतौ भ्वा० आ०

विस्तीर्णं शतं शतसङ्ख्याकानि योजनानि—नि (वि० पु० क०) शतयोजनानि चतुःशतक्रोशप्रमाणं विस्तीर्णः—र्णः तं-र्णं लवणार्णवं क्षारसमुद्रं पुप्लुवे उड्डीय ततार ॥६३॥

तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् ।
ददर्श सीतां ध्यायन्तीमशोकवनिकागताम् ६४

१ पुरी—पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात् पुरम् ॥ पु०
२ ध्यै—चिन्तायां ध्यायति प्रोक्तो निध्यायति निरीक्षणे।
आध्यायति तु विद्वद्भिरुत्कण्ठाकर्मणि स्मृतः॥ना० क्रि०
३ अशोक—अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः ।
पिचुमन्दश्च निम्बेऽथ पिच्छिलाऽगुरु शिंशपा ॥
कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ।
भण्डिलोऽप्यथ चाम्पेयचम्पकौ हेमपुष्पकः ॥
एतस्य कलिका गन्धफली स्यादथ केसरे ।
बकुलो, वञ्जुलोऽशोके समौ करकदाडिमौ ॥ व०

तद् २-३, लङ्का विशेषनाम, सद् २६-८, रावण विशेषनाम, पाल २२-३, दृश ३-१०, सीता विशेषनाम, वन ३८-१, गम् १६-२,

---

१ पुर् स्त्री० २ नगरी स्त्री० ३ ध्यै चिन्तायाम् भ्वा० प०

हनुमान् सीतां ददर्श सक० प्र०

हनुमान् रावणपालितां रावणेन दशाननेन पालिता रक्षिता—ता( तृ० त० ) तां—ताम् लङ्कां लङ्कानाम्नीं पुरीं नगरीं समासाद्य प्राप्य तत्र लङ्कायाम् अशोकवनिकागताम् ह्रस्वं वनं वनिका, अशोकानां वञ्जुलवृक्षाणां वनिका वाटिका— का ( ष० त० )–कायां गता स्थिता—ता (स० त०) तां–तां ध्यायन्तीं श्रीरामचन्द्रमेव स्मरन्तीं सीतां जानकीं ददर्श अवलोकयामास ॥ ६४ ॥

निवेदयित्वाऽभिज्ञानं प्रवृत्तिं विनिवेद्य च ।
समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ६५॥

१ प्रवृत्ति–वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ।
आख्याऽऽह्वेऽभिधानं च नामधेयं च नाम च ॥ श०
२ श्वस्–श्वसिति प्राणनेऽदादौ विश्वासे विश्वसित्यथ ।
आश्वासने आश्वसिति समाश्वसिति सान्त्वने॥ ना०क्रि०
३ मृद्–भनक्ति मोटयति च भञ्जयत्यपि मोटति ।

---

१ "कुत्सिते" (पा० सू० ५-३-७४ ) इति कप्रत्यन्ताट्टाप्, ह्रस्वम् ।
२ नामन् न०
३ श्वस प्राणने अ० प०
४ भञ्जो आमर्दने रु० प०
५ मुट संचूर्णने चु० उ० विभाषितणिच् ।
६ भञ्जो, स्वार्थिकण्यन्तः ।

क्षुटंति[1] मर्दते[2] मर्दे मृद्नाति[3] च पिनष्टि[4] च ॥
क्षुन्ते[5] क्षुणत्ति संचूर्णयति[6] देवयति[7] द्वयोः॥क्ष०क्रि०।
४ तोरण–तोरणोऽस्त्री बहिर्द्वारं, पुरद्वारं तु गोपुरम्। पु०
विद १–६, ज्ञा २–१०, च २–७, वैदेही विशेषनाम।

हनुमान् तोरणं मर्दयामास सक० प्र०

हनुमान् अभिज्ञानम् अङ्गुलीयकरूपरामचिन्हं निवेदयित्वा समर्प्य प्रवृत्तिं वृत्तान्तं विनिवेद्य उक्त्वा वैदेहीं सीतां समाश्वास्य सान्त्वयित्वा च तोरणं लङ्काबहिर्द्वारं मर्दयामास चूर्णयामास ॥ ६५ ॥

**पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि।**
**शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत्॥६६॥**

१ सेना–ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः।
वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ क्ष०
२ अग्र—अग्रं पुरस्तादुपरि परिमाणे पलात्मनि।
आलम्बने समूहे च, प्रान्ते च स्यान्नपुंसकम् ॥
अधिके च प्रधाने च प्रथमे चाभिधेयवत्। ना०

---

१ क्षुट आक्षेपमर्दनयो तुः प०
२ मद मर्दने भ्वा. आ.
३ मृद क्षोदे क्र्या० प०
४ पिष्लृ संचूर्णने रु० प०
५ क्षुदिर् संपेषणे रु० उ०
६ चूर्ण संकोचने चु० उ० संपूर्वः।
७ दिवु मर्दने चु. उ.

३मन्त्रिन्-मन्त्री धीसचिवोऽमात्योऽन्येकर्मसचिवास्ततः। क्ष०
४ शूर—शूरो वीरश्च विक्रान्तो, जेता जिष्णुश्च जित्वरः। क्ष०

पञ्चन् संख्यावाचकं, गम् १६—२, हन २५—४, सप्तन् संख्यावाचकं, सुत१९-५ अपि २५—४, अक्ष विशेषनाम, च२—७, पिषू ६५—३,ग्रह ३६—१।

हनुमान् ग्रहणं समुपागमत् सक० प्र०

हनुमान् पञ्च सेनाग्रगान् अग्रे पुरस्ताद् गच्छन्ति ते —गाः (उप० त०) सेनायाः अग्रगाः—गाः (ष०त०) तान्—गान् पिङ्गलनेत्रप्रभृतिसेनापतीन् सप्त मन्त्रिसुतान् मन्त्रिणाम् अमात्यानां सुताः पुत्राः—ताः (ष० त०) तान्—सुतान् अपि हत्वा मारयित्वा शूरं वीरम् अक्षम् अक्षनामानं रावणपुत्रं निष्पिष्य चूर्णीकृत्य च ग्रहणं रावण ज्येष्ठपुत्रमेघनादप्रयुक्तब्रह्मास्त्रेण बन्धनं समुपागमत्प्राप ६६०

अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात्।
मर्षयन् राक्षसान्वीरो यन्त्रिणस्तान् यदृच्छया॥
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम्।
रामाय प्रियमाख्यातुं पुनरायान्महाकपिः॥६७॥

१ अस्त्र—आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ। क्ष०

---

१ जेतृ पु० न०, जेत्री स्त्री०

२ मुच—मोक्षणे मुञ्चते[1] षष्ठे मुञ्चति, प्रथमे त्वयम् ।
मुञ्चते[2] आत्मनेमात्रः कल्कने कथनेऽपि च ॥
प्रतेराङश्च भूषादिमोचने, यकि मुच्यते ।
कैवल्ये, सनि वैराग्ये मुमुक्षत इतीरितः ॥
चुरादौ मोचयति[3] च मोचने मोदने द्वयोः । ना० क्रि०
३ मृष—तितिक्षते[4]ऽधिकुरुते[5] क्षान्तौ मर्षति[6] मृष्यति[7] ।
मृष्यते सहते[8] प्रोक्तस्तथा सह्यति[9] सुह्यति ।
क्षाम्यत्[10]येवं धर्षयति[11] क्षमते[12] परिमृष्यति ।
तथा मर्षयति[13] च्योसयति[14] च्यावयति[15] द्वयोः ॥ अं० क्रि०
४ यन्त्र—संक्षेपे यन्त्रयति[16] च तथा निष्पीडने द्वयोः
५ यदृच्छा·यदृच्छास्वैरिताहेतुशून्यात्वास्याविलक्षणम् । सं०

---

१ मुचॢ मोक्षणे तु० उ०
२ मुचि कल्कने, कथनमित्यन्ये, भ्वा० आ०
३ मुच प्रमोचने मोदने च चु० उ०
४ तिज निशाने, क्षमायां सन् "तिजेः क्षमायाम्" इति वार्तिकात् ।
५ डुकृञ् करणे त० उ० अधिपूर्वः ।
६ मृषु सेचने सहने च भ्वा० प०
७ मृष तितिक्षायाम् दि० उ०
८ षह मर्षणे भ्वा० आ०
९ षह षुह चक्यर्थे दि० प०
१० क्षमू सहने दि० प०
११ धृष प्रसहने चु० उ०
१२ क्षमूष् सहने भ्वा० आ०
१३ मृष तितिक्षायाम् चु० उ०
१४ च्युस सहने हासने च, चु० उ०
१५ च्यु सहने हसने च, चु, उ.
१६ यत्रि संकोचे चु० उ०

६ ऋते-पृथग् विनाऽन्तरेणर्ते हिरुङ् नाना च वर्जने ।अ०

७ या—अदादौ याति गमने प्रस्थाने तु प्रयाति हि ।
अनुयाति त्वनुगमे प्रतियात्यरिसम्मुखम् ॥
मृतौ निर्याति निःसारेऽथापयाति पलायने ।
अवबोधेऽवयाति स्याच्छठत्वे तु वियाति हि ॥ ना.क्रि

आत्मन् ४-१, ज्ञा २-१०, पितामह १२-१, वर १-७, राक्षस ३९-३, वीर २३-२, तद् २-३, दह ४७-१, पुरी ६४-१, लङ्का सीता विशेषनाम, च २-७, मिथिला विशेषनाम, राम ८-३, प्रिय ३-९, कृपा ६-७, पुनः ५७-२, महत् ५-७, कपि ५०-१ ।

महाकपिः आयात् अक० प०

वीरः शूरः महाकपिः महान् श्रेष्ठश्चासौ कपिश्च -पिः (वि० पू० क०) हनुमान् आत्मानं स्वं पैतामहात् पितामहस्य ब्रह्मदेवस्य अयं-हः ( त० वृ० ) तस्मात् -हात् वरात् वरदानहेतोः अस्त्रेण ब्रह्मास्त्रेण उन्मुक्तम् अबद्धं ज्ञात्वा बुध्वा यदृच्छया स्वेच्छया तान् यन्त्रिणः यन्त्रयन्ति रज्जुबन्धेन कर्षयन्ति ते यन्त्रिणः ( कृ० वृ० ) तान् यन्त्रिणः पीडाकरान् राक्षसान्

---

१ अन्तरेण, ऋते अव्य०      २ या प्रापणे अदा. प,

निशाचरान् मर्षयन् सहमानः सन्. मैथिलीं मिथिलस्य मिथिलराजस्य अपत्यं स्त्री मैथिली ( त० वृ० ) तां–लीं सीतां जानकीम् ऋते विना,लङ्कां लङ्कानाम्नीं पुरीं नगरीं दग्ध्वा भस्मीकृत्य ततः तदनन्तरं रामाय श्रीरामचन्द्रं प्रति प्रियं हृद्यम् आख्यातुं कथयितुं पुनः मुहुः आयात् प्राप ॥ ६७ ॥

सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् ।
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥६८॥

तद् २–३, गम १६–२, महत् ५–७, आत्मन् ४–१, कृ २–११, राम८–३, प्र ३४–५,दक्षिणं प्रसिद्धं, विद १–६, नञ् ४–५, मा २४–६, दृश ३–१०, सीता विशेषनाम, इति ६–३, तत्त्व १४–५ ।

सः रामं इति न्यवेदयत द्विक० प्र०

अमेयात्मा न मेयः परिच्छेद्यः—यः ( नञ् त० ) —यः आत्मा चित्तं यस्य सः—त्मा ( ष० ब० ) सः हनुमान् महात्मानं महान् सीतावियोगेऽपि अविचाली आत्मा अन्तःकरणं यस्य सः—त्मा ( ष० ब० ) तं–नं श्रीरामचन्द्रम् अभिगम्य प्राप्य प्रदक्षिणं कृत्वा मया सीता तत्त्वतः यथार्थं दृष्टा अवलोकिता इति रामं न्यवेदयत् अकथयत् ॥ ६८ ॥

ततः सुग्रीवसहितो गत्वा तीरं महोदधेः ।
समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥६९॥

१. क्षुभ-क्षोभेतक्षुभ्यतिक्षोभेक्षुभ्नातिच्छान्दसंकचित् ।क्ष. क्रि

२ आदित्य—सूरसूर्यार्यमोऽऽदित्यद्वादशात्मदिवाकराः ।
भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः ।
विकर्तनाऽर्कमार्तण्डमिहिरारुणपूषणः ॥
द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥
भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।
पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ॥
कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ।
प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ॥
इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ।

तद् २–३, सुग्रीव विशेषनाम, सहित ५८–३, गम् १६–२, तीर २६–८, महत् ५–७, उदधि, स-

---

१ क्षुभ संचलने भ्वा० आ०; दि० प०, क्या० प०

२ अर्यमन् पुं०

३ द्वादशात्मन् पुं०

४ भास्वत्, विवस्वत् अत्यन्तौ पुं०

५ पूषन् पुं०

६ सवितृ पुं०

७ तामिस्रहन् पुं०

८ कर्मसाक्षिन् पुं०

९ अंशुमालिन् पुं०

मुद्र १६–४, शर ३५–५, सम् ५०–२, निभ ११–१

सः समुद्रं क्षोभयामास सक० प्र०

ततः हनुमद्वाक्यश्रवणानन्तरं सुग्रीवसहितः सुग्रीवेण कपिराजेन सहितः युक्तः–तः ( तृ० त० ) श्रीरामचन्द्रः महोदधेः महान् शतयोजनविस्तीर्णश्चासौ उदधिः समुद्रश्च महोदधिः ( वि० पू० क० ) तस्य–धेः तीरं तटं गत्वा प्राप्य आदित्यसन्निभैः आदित्येन सूर्येण तुल्याः–भाः( तृ० त० ) तैः–भैः शरैः बाणैः समुद्रं सागरं क्षोभयामास सञ्चालयामास ॥ ६९ ॥

**दर्शयामास चात्मानं समुद्रः सरितांपतिः।**
**समुद्रवचनाच्चैव नलः सेतुमकारयत् ॥ ७० ॥**

१ सेतु–पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान्।

दृश २–१०, च २–७, आत्मन् ४–१, समुद्र १६–४ सरित् २७–२, पति १३–३, वचन १–५, एव ७–३, नल विशेषनाम,कृ २–११।

समुद्रः आत्मानं दर्शयामास, नलः सेतुम् अकारयत् सक० प्र०

सरितां नदीनां पतिः स्वामी समुद्रः सागरः आत्मानं स्वं, नलं सेतुबन्धार्थं दर्शयामास। नलः नलनामा कपिः समुद्रवचनात् समुद्रस्य सागरस्य वचनं वाक्यं–चनं

( ष० त० ) तस्मात्–त् एव च सेतुम् आलिम् अका-
रयत् कारितवान् ॥ ७० ॥

तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे ।
रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ७१

१ व्रीडा-मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा, साऽपत्रपाऽन्यतः।वाद्

तद् २–३, गम् १६–२, पुरी ६४–१, लङ्का विशे-
षनाम, हन् ३५–४, रावण विशेष०, आहव ४–१०, रा-
म ८–३, सीता २५–४, अनु २७–७, आपू २७–८,
पर ५–४ ।

रामः व्रीडाम् उपागमत् सक० प्र०

रामः श्रीरामचन्द्रः तेन सेतुना मार्गेण लङ्कां लङ्का-
नाम्नीं पुरीं नगरीं गत्वा प्राप्य आहवे युद्धे रावणं दशा-
ननं हत्वा मारयित्वा सीतां जानकीम् अनुप्राप्य समीपं प्रा-
प्य पराम् अतिशयितां व्रीडां लज्जाम् उपागमत् प्राप ॥७१॥

तामुवाच ततो रामः परुषं जनसंसदि ।
अमृष्यमाणा सा सीता विवेश ज्वलनं सती ७२

१ परुष–निष्ठुरं परुषं, ग्राम्यमश्लीलं, सूनृतं प्रिये ।
सत्येऽथ संकुलक्लिष्टे परस्परपराहते ॥ श०

२ संसद्—समज्या परिषद्गोष्ठी सभासमितिसंसदः। [1]
आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः[2] ॥ अ०
३ विश—प्रवेशने विशति[3] च स्यात् संविशति मैथुने।
स्वापे, आविशति व्याप्तौ दैव्यां मानवदेहके ॥
उपवेशे उपविशत्यभिनेः पर आग्रहे।
आत्मनेऽथ भृतौ भोगे स्यात् निर्विशति कीर्तितः॥ना.क्रि.

तद् २–२, वच् ६–६, राम ८–३, जन ८–५, नन् ४–५, मृष ६७–४, सीता २५–४, ज्वलन १८–५, सती २०–३।

रामः तां परुषम् उवाच द्विक० कर्त० प्र०
सीता ज्वलनं विवेश सक० प्र०

ततः लज्जाप्राप्तिहेतोः रामः श्रीरामचन्द्रः जनसंसदि जनानां लोकानां संसद् सभा–द् ( ष० त० ) तस्यां –दि परुषं निष्ठुरवचनं तां सीताम् उवाच जगाद। सती पतिव्रता सा रावणगृहस्थिता सीता जानकी अमृष्यमाणा रामोक्तवचनमसहमाना सती ज्वलनम् अग्निं विवेश प्राविशत् ॥ ७२ ॥

**ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम्।**
**बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः ॥७३॥**

१ संसद् स्त्री०  २ सदस् स्त्री०, न०  ३ विश प्रवेशने तु० प०

१ भा—चकास्ति[1] भासते[2] भाति[3] द्योतते[4] रोचते[5]ऽसति[6] ।
राजति[7] त्वेषति[8] घृणो[9]त्यात्मनेऽपि चतुष्टयम् ॥
भ्राजते[10] शुम्भति[11] शुभ[11]त्येजते[10] शोभते[12]ऽपि च ।
प्रकाशते[13] भ्राशते[14] च भ्लाशते[14] इत्यन्यपि द्वयम् ॥
भ्रेजते[10] दीव्यति[15] हटत्य[16]मी ज्वलति[17] जोतते[18] ।
वर्चते[19] दीप्यते[20] दीप्तौ कनत्यु[21]ल्लसतीति[22] च ॥
केचिद् जिघर्ति[23] दीधीते[24] बभस्ति[25] च्छान्दसान् विदुः ।
कञ्चते[26] योतते[18] मन्दते[27]ऽमी द्वात्रिंशदीरिताः ॥ म० कि०

---

१ चकासृ दीप्तौ अ० प०　　२ भास दीप्तौ भ्वा० आ०
३ भा दीप्तौ अ० प०　　४ द्युत दीप्तौ भ्वा० आ०
५ रुच दीप्तावभिप्रीतौ च भ्वा० आ०
६ अस गतिदीप्त्यादानेषु भ्वा० उ०　　७ राजृ दीप्तौ भ्वा० उ०
८ त्विष दीप्तौ भ्वा० उ०　　९ घृणु दीप्तौ त० उ०
१० एजृ भ्रेजृ भ्राजृ दीप्तौ भ्वा० आ०　　११ शुभ शुम्भ शोभार्थे तु० प०
१२ शुभ दीप्तौ भ्वा आ०　　१३ काशृ दीप्तौ भ्वा० आ० प्रपूर्वः ।
१४ भ्राश भ्लाश दीप्तौ भ्वा० आ०
१५ दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु दि० प०
१६ हट दीप्तौ भ्वा० प०　　१७ ज्वल दीप्तौ भ्वा प०
१८ युतृ जुतृ भासने भ्वा० प०　　१९ वर्च दीप्तौ भ्वा० आ०
२० दीपी दीप्तौ दि० आ०　　२१ कनी दीप्तिकान्तिगतिषु भ्वा० प०
२२ लस श्लेषणक्रीडनयोः भ्वा० प० उत्पूर्वः ।
२३ घृ क्षरणदीप्त्योः जु० प०　　२४ दीधीङ् दीप्तिदेवनयोः अ० आ०
२५ भस भर्त्सनदीप्त्योः जु० प०
२६ कचि काचि दीप्तिबन्धनयोः भ्वा० आ०
२७ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु भ्वा० आ०

तद् २–३, अग्नि १८–५, वचन १–५, सीता २५–४, ज्ञा २–१०, वि ३९–१, गम् १६–२, कल्मष ८६–२, राम ८–३, सम् ५०–२, प्र ३४–५, हृष्ट ६–५, पूजित ४९–३, सर्व ३–३, दैवत ४–८।

रामः बभौ अक० प्र०

ततः सीताप्रवेशानन्तरं सर्वदैवतैः सर्वाणि सम्पूर्णानि च तानि दैवतानि देवाश्च सर्वदैवतानि (वि०पू०क०) तैः–तैः पूजितः अञ्चितः रामःश्रीरामचन्द्रः अग्निवचनात् अग्नेः वचनं वाक्यं–नं ( ष० त० ) तस्मात्–त् हेतोः सीतां जानकीं विगतकल्मषाम् विगतं रहितं कल्मषं पापं यस्याः सा–ल्मषा ( ष० ब० ) तां–म् ज्ञात्वा बुद्ध्वा सम्प्रहृष्टः अतिसन्तुष्टः सन् बभौ शुशुभे ॥७३॥

**कर्मणा तेन महता त्रैलोक्यं सचराचरम् ।**
**सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥७४॥**

१ कर्मन्–कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः। सं०
२ चराचर–चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम् । वि०
३ गण—समूहो निवहव्यूहसन्दोहविसरव्रजाः ।
स्तोमौघनिकरव्रातवारसंघातसञ्चयाः ॥

---

१ ओघ पुं०

समुदायः समुदयः समवायश्चयो गणः ।
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ॥ सिं०

४ तुष—मोदते[1] ह्लादते[2] माद्यत्या[3]नन्दति[4] च तुष्यति[5] ।
हृष्यति[6] प्रीयते[7] निर्वाति[8]र्यपि नन्दति तूषति[9] ॥
निर्वृणो[10]ऽथात्मने सुखयत्[11]येते प्रीतौ सुखायते[12] ।
प्रचेतीभवती[13]त्येवं प्रमनीभवती[13]ति च ॥
सुमनायत[14] इत्येवं सुमनीभवती[13]त्यपि । अं० क्रि०

तद् २–३, महत् ५–७, त्रि संख्या०, लोक २–५, सह ३७–२, देव ४–८, ऋषि ५–८, राघव ८–३, आत्मन् ४–१ ।

त्रैलोक्यम् अभूत् अक० प्रयोगः

सचराचरं चरं जङ्गमं च अचरं स्थावरं च–रे (इ०

---

१ मुद हर्षे भ्वा० आ०
२ ह्लादी सुखे च भ्वा० आ०
३ मदी हर्षे दि प०
४ टुनदि समृद्धौ भ्वा० प० आङ् पूर्वः, तद्रहितोऽपि ।
५ तुष प्रीतौ दि० प०
६ हृष तुष्टौ दि० प०
७ प्रीङ् प्रीतौ दि० आ०
८ वा गतिगन्धनयोः अ० प० निर्पूर्वः ।
९ तुष तुष्टौ भ्वा० प०
१० वृञ् वरणे स्वा० उ० निर्पूर्वः ।
११ सुख दुःख तत्क्रियायाम् चु० प० बाहुल्काण्णिजभावः ।
१२ सुखाय क्यङन्तनामधातु आ०
१३ भू सत्तायां भ्वा० प० प्रचेती, प्रमनी, सुमनी, उपपदपूर्वः ।
१४ सुमनाय क्यङन्त नामधातुः आ०

द्व०)-भ्यां सहितं युक्तं-चरं (उप० स०) सदेवर्षिगणं देवाः देवताश्च ऋषयःच-यः ( इ० द्व० )-णां गणः समुदायः-णः ( ष० त० )-णेन सहितं युक्तं-णं (उप० स० ) त्रैलोक्यं ब्रह्माण्डं महात्मनः महान् श्रेष्ठः आत्मा स्वभावो यस्य सः-त्मा ( ष० ब० ) तस्य-नः राघवस्य श्रीरामचन्द्रस्य तेन रावणवधरूपेण महता कर्मणा क्रियया तुष्टं सन्तुष्टम् अभूत् ॥ ७४ ॥

**अभिषिच्य च लङ्कायां राक्षसेन्द्रं बिभीषणम्।**
**कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥७५॥**

१ सिच्-क्षरणे सिञ्चते, सिञ्चति, प्रसेके प्रसिञ्चति ।
गर्भाधाने नेः परः स्यात्प्रोक्षणे परिषिञ्चति ॥
मङ्गलस्थापने राज्ये विधिना अभिषिञ्चति। ना० क्रि०
२ज्वर-जवने जूतिः सातिस्त्ववसाने स्यादथ ज्वरे जूर्तिः।सं०

च २-७, लङ्का नाम, राक्षस ३९-३, इन्द्र १३-३, विभीषण नाम, कृ २-११, तदा १६-१, राम ८-३, वि ३९-१, प्र ३४-५, मुद ७४-४, ह २३-३ ।

रामः प्रमुमोद अक० प्र०

कृतकृत्यः कृतं सम्पादितं कृत्यं रावणवधरूपं कार्यं

१ विधेयविशेषणम् । २ षिच-क्षरणे तु० उ०

येन सः—त्यः (तृ०ब०) रामः श्रीरामचन्द्रः विभीषणं लङ्कायां लङ्कानाम्न्यां नगर्यां राक्षसेन्द्रं राक्षसानां निशाचराणाम् इन्द्रः स्वामी—न्द्रः (ष०त०) तं—न्द्रम् अभिषिच्य राज्ये स्थापयित्वा तदा विज्वरः विगतः नष्टः ज्वरः विभीषणराज्याभिषेकचिन्ता यस्य सः—रः (ष० ब०) सन् प्रमुमोद जहर्ष ह विस्मये ॥ ७५ ॥

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान् ।
अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ॥ ७६ ॥

१ सुहृद्—वयस्यः स्निग्धः सवया अथ मित्रं सखा सुहृत् । इ०

देवता ४-८, वर १-७, आप् २७-८, सम्५०—२, स्था१४—६, च-२-७, वानर५०—१, अयोध्या विशेषनाम, राम ८-३, पुष्पक कुबेरविमाननाम, वृ४२—३ ।

रामः अभूत् अक० प्र०

सुहृद्वृतः सुहृद्भिः विभीषणसुग्रीवादिभिः वृतः सहितः—तः (तृ० त०) रामः श्रीरामचन्द्रः देवताभ्यः ब्रह्मादिदेवताभ्यः वरं सुप्तोत्थितवद्वानरा उत्तिष्ठन्तु इत्येवं रूपं प्राप्य लब्ध्वा अत एव वानरान् युद्धमृतान् मर्कटान् समुत्थाप्य जीवयित्वा च पुष्पकेण पुष्पकनामक-

---

१ छान्दसं परस्मैपदम् । २ सवयस् पुं. ३ सखि पुं. ४ सुहृद् पुं० ५ सम् उद्पूर्वकस्थाधातोर्ण्यन्ताल्ल्यप् । ६ चो हेतौ ।

कुबेरविमानेन अयोध्याम् अयोध्यानाम्नीं नगरीं प्रस्थितः चलितः अभूत् ॥ ७६ ॥

भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः ।
भरतस्यान्तिके रामो हनुमन्तं व्यसर्जयत् ॥७७॥

१ पराक्रम–पराक्रमो विक्रमे स्यात्सामार्थ्योद्योगयोरपि । ना०
२ अन्तिक–समीपे निकटाऽऽसन्न सन्निकृष्टसनीडवत् ।
सदेशाऽभ्याशसविधसमर्यादसवेशवत् ॥ वि०

भरद्वाज विशेषनाम, आश्रम ४४-४, गम् १६ २, राम ८–३, सत्य २–१२, भरत हनुमत् विशेषनाम, सृज् २६–६ ।

रामः हनुमन्तं व्यसर्जयत् सक० प्र०

सत्यपराक्रमः सत्यः अन्वर्थः पराक्रमः युद्धोद्योगो यस्य सः–मः (ब० व० ) रामः सुन्दरः रामः श्रीरामचन्द्रः भरद्वाजाश्रमं भरद्वाजस्य भरद्वाजऋषेः आश्रमः मुनिस्थानं—मः ( ष० त० ) तं–मं गत्वा प्राप्य भरतस्य भरतनामकस्वकनिष्ठभ्रातुः अन्तिके समीपे हनुमन्तं व्यसर्जयत् प्रेषयामास ॥७७॥

---

१ चतुर्दशे तु संपूर्णे वर्षेऽहनि रघूत्तम । न हि द्रक्ष्यामि यदि त्वां प्रवेक्ष्यामि हुताशनम् ॥ इति भरतेन प्रतिज्ञातत्वाद् भरद्वाजाज्ञया तदाश्रमवासे चतुर्दशवर्षापेक्षयैकदिनविलम्बः स्यादिति स्वागमनप्रबोधनाय, महत्या वानरसेनया सह-

**पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा ।**
**पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥७८॥**

१ आख्यायिका-आख्यायिकोपलब्धार्था, पुराणंपञ्चलक्षणं श.
२ रुह—उद्भवे रोहति प्रादुर्भाव आरोहणे त्वयम् ।
अधेरारूढः परश्चावरोहणे त्ववरोहति ॥
संरोहयति संप्रोक्तो णिजन्तो रोपणे द्वयोः॥ना० क्रि०

पुनर् ८७—२, जल्प ६—६, सुग्रीव विशेषनाम, सहित ५८—३, तदा १६—१, पुष्पक कुबेरविमाननाम, तद् २—३, सम् ५०—२, नन्दिग्राम विशेषनाम, या ६७—७ ।

सः नन्दिग्रामं ययौ सक० प्र०

सुग्रीवसहितः सुग्रीवेण कपिराजेन सहितः युक्तः (तृ० त०) श्रीरामचन्द्रः तत् कौबेरं पुष्पकं पुष्पकनामकविमानं पुनः समारुह्य अधिष्ठाय तदा गमनकाले आख्यायिकां पूर्वकथां जल्पन् पूर्ववत् कथयन् सन् तदा तस्मिन्नेव काले नन्दिग्रामं ययौ प्राप ॥७७॥

**नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः ।**
**रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ॥७९॥**

---

नन्दिग्रामे सहसा गमने भरतः शङ्कितो मा भूदिति वा हनुमतः प्रेषणम् ।
१ रुह बीजजन्मनि प्रादुर्भावे च भ्वा० प०

१ जटा–जटा व्रतिशिखायां च वेदस्य विकृतौ तथा।
तरुमूले जटामांस्यां नित्यस्त्रीलिङ्ग इष्यते ॥ ना०
२ हा–त्यागे जहात्यथ गतौ जिहीते, उदये तु हि।
उज्जिहीते जुहोत्यादा ओहाक् ओहाङ् उभौ स्मृतौ॥ ना.क्रि.

नन्दिग्राम विशेषनाम, भ्रातृ २३–२, सहित ५८–३, न ४—५, अघ ८६–२, राम ८–१, सीता २५—४, अनु २७—७, आप् २७–८, राजन् २१–१, पुनः ५७-२।

रामः राज्यम् अवाप्तवान् सक० प्र०

भ्रातृभिः भरतादिभिः सहितः युक्तः रामः श्रीरामचन्द्रः नन्दिग्रामे नन्दिग्रामनामकभरतस्थाने जटां हित्वा त्यक्त्वा वापयित्वेत्यर्थः। सीतां मुनिवेषत्यागेन प्रहृष्टां जानकीम् अनुप्राप्य लब्ध्वा अनघः न अघं दुःखं यस्य सः–घः ( ष० ब० ) सन् पुनः मुहुः राज्यं राज्ञः नृपस्य भावः धर्मः राज्यं ( त० वृ० ) अवधाधिपत्यम् अवाप्तवान् प्राप्तवान् ॥ ७९ ॥

**प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः।**
**निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥८०॥**

---

१ ओहाक् त्यागे जु० प०  २ ओहाङ् गतौ जु० आ०

१ पुष्ट—पुष्टे तु पुषितं, सोढे क्षान्तमुद्वान्तमुद्गते । वि०
२ निरामय-वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ।म०
३ रोग—स्त्री रुग्, रुजा चोपतापरोगव्याधिगदाऽऽमयाः। म०
४ दुर्—दुर् कुत्सायामीषदर्थे वैवर्ण्ये व्यृध्यलाभयोः । ना०
५ भिक्षा—प्रेक्षा नृत्येक्षणं प्रज्ञा, भिक्षा सेवाऽर्थना भृतिः । ना०
६ भय—चर्तुदश दरस्त्रासो भीतिर्भीः साध्वसं भयम् । नाव्य०
७ वृज्—वृणक्ति वर्जने वृक्ते परस्मै वर्जति स्मृतः ।

द्वयोर्वर्जयति प्रोक्तोऽथाऽपादू दाने प्रकीर्तितः ॥

अपवृज्यत इत्येते वैराग्ये यक्यकर्मकाः ॥ ना० क्रि०

प्र ३४–५, हृष्ट मुदित ६—७, लोक २—५, तुष ७४–४, सु १०–७, धर्म २–९, हि ५–६, न ४–५, च २–७।

लोकः अस्ति अक० प्र०

लोकः जनः प्रहृष्टमुदितः प्रकर्षेण अतिशयेन हृष्टः पुत्रपौत्रपश्वादिसंपत्त्या प्रीतश्च-ष्टः (वि० उ० क०) प्रहृष्टश्चासौ मुदितः सन्तुष्टश्च—तः (वि० उ० क०) तुष्टः प्रीतियुक्तः पुष्टः दारिद्र्यकार्श्यरहितः सुधार्मिकः भक्तिपूर्वकरामपूजाद्याचारेण शोभनश्चासौ धर्मः च—र्मः ( वि० पू० क० )—र्मं चरति अनुतिष्ठतीति—कः (त० वृ० ) निरा-

---

१ रुज् स्त्री. २ वृजी वर्जने, रु०प०अ० आ०, चु. उ. वैकल्पिकणिच,

मयः निर्गतः रहितः आमयः मनःपीडा यस्य सः-यः (ष० ब०) अरोगः न नास्ति रोगः शरीरव्याधिर्यस्य सः -गः (ष० ब०) दुर्भिक्षभयवर्जितः भिक्षाणां त्रिविधानामपि व्यृध्दिः अभावः दुर्भिक्षं (अव्य०) दुर्भिक्षं च भयं शत्रुचौरादिभ्यो भीतिः च—ये (इ० द्वं०)-भ्यां वर्जितः रहितः—तः (तृ० त०) [1]भविष्यति ॥ ८० ॥

**न पुत्रमरणं केचिद्द्रक्ष्यन्ति पुरुषाः क्वचित् ।**
**नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ८१**

१ मरण—स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।
अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ क्ष०
२ पुरुष—मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ।
३ विधवा—अवीरा विष्पतिसुता विश्वस्ताविधवे समे । म०
४ भू—सत्तायां भवति प्रोक्तः सामर्थ्ये प्रभवत्यथ ।
पराभवेऽभिभवति पराभवति च स्मृतः ॥
उत्पत्तावुद्भवतिचानुभवेऽनुभवत्यथ ।
अन्तर्धाने ऽन्तर्भवति तिरोभवति च स्मृतः ॥
प्रतिभवति मध्यस्थे सम्भवे सम्भवत्यथ ।

---

[1] वर्तमानसामीप्ये लट् । [2] नृ पु० ।

तिरस्कारे परिभवत्यृध्दौ विभवतीति च ॥
सम्भावयत्यादरे चोत्पादने भावयत्यपि ।
प्राप्तौ भावयते ज्ञेयश्चुरादावात्मनेपदे ॥ ना० क्रि०

न २९-३, पुत्र २८-१, किम् २-१, चित् ५८-१, दृश् ३-१०, नारी २५-१, च २-७, नञ् ४-५, नित्य २४-१, पतिव्रता २०-३ ।

पुरुषाः पुत्रमरणं न द्रक्ष्यन्ति सक० प्र०, नार्यः भविष्यन्ति अक० प्र० ।

केचित् पुरुषाः मनुष्याः क्वचित् कुत्रचिदपि पुत्रमरणं पुत्राणां सुतानां मरणं नाशः-णं (ष० त०) न द्रक्ष्यन्ति अवलोकयिष्यन्ति । नार्यः स्त्रियः नित्यं सदा अविधवाः न विधवाः पतिरहिताः-वाः (न० त०) पतिव्रताः साध्व्यः च भविष्यन्ति ॥८१॥

न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥८२॥

१ किञ्चित्-किञ्चिदीषन्मनागल्पे, प्रेत्यामुत्र भवान्तरे। अ०

१३

२ मस्ज-मज्जत्याप्लवते[1] स्नाति[2] स्नायत्येतेऽवगाहते[3] ।
स्युर्मज्जने क्रुडत्येते[4] मार्ष्टि[5] शुन्धयति[6] द्वयोः ।
शुचीभावे शुध्यति[7] च शुन्धत्यप्येवदायति[8] ॥ त्र० क्रि०
३ जन्तु-प्राणी[9] तु चेतनो जन्मी[10] जन्तुजन्युशरीरिणः[11] । का०
४ वात- श्वसनः स्पर्शनो वायुर्मातरिश्वा[12] सदागतिः ।
पृषदश्वो गन्धवहो गन्धवाहाऽनिलाऽऽशुगाः ॥
समीरमारुतमरुज्जगत्प्राणसमीरणाः[13] ।
नभस्वद्वातपवनपवमानप्रभञ्जनाः[14] ॥ स्व०
५ ज्वर-व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगन्दराः । म०
६ क्षुध्- अशना या बुभुक्षा क्षुद्, ग्रासस्तु कवलः पुमान् ।म०
७ तस्कर-चौरैकागारिक[15]स्तेनदस्युतस्करमोषकाः ।

---

(१) टुमस्जो शुद्धौ तु० प०
(२) च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ भ्वा० आ० आङ्पूर्वः ।
(३) ष्णा शौचे अ० प०
(४) ष्णै वेष्टने, शोभायां चेत्येके, शौच इत्यन्ये भ्वा० प०
(५) गाहू विलोडने भ्वा० आ० अवपूर्वः ।
(६) क्रुड भृड निमज्जन इत्येके तु० प० ।
(७) मृजू शुद्धौ अ० प०    (८) शुन्ध शौचकर्मणि चु० उ०
(९) शुध शौचे दि० प०    (१०) शुन्ध शुद्धौ भ्वा० प०
(११) दैप् शोधने भ्वा० प० अवपूर्वः ।
(१२) प्राणिन् पु०    (१३) जन्मिन् पु०    (१४) शरीरिन् पु०
(१५) मातरिश्वन् पु० ।
(१६) मरुत् पु०    (१७) नभस्वत् पु०
(१८) ऐकागारिक पु०

प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ॥ शू०
न २९-३, च २-७, अग्नि १८-५, जन्
५७-६, भय ८०-६, अप् २७-४, अपि २५-५,
कृ २-११, तथा २५-६, तद् २-३ ।

भयं नास्ति, जन्तवः न मज्जन्ति, भयं नास्ति, क्षुद्भयं नास्ति, तस्करभयं नास्ति अक० प्र० ।

किञ्चित् ईषदपि अग्निजम् अग्नेः वन्हेः जातम् उत्पन्नं-जं (उप० स०) भयं भीतिः नास्ति। जन्तवः प्राणिनः अप्सु जलेषु न मज्जन्ति। किञ्चित् ईषद् अपि वातजं वातात् वायुतः जातम् उत्पन्नं-जं (उप०स०) तथा ज्वरकृतं ज्वरेण कृतं-तं (तृ० त०) भयं नास्ति। तत्र रामराज्ये क्षुद्भयं क्षुधः बुभुक्षायाः भयं भीतिः-यं (ष०त०) तथा तस्करभयं तस्करेभ्यः चौरेभ्यः भयं भीतिः-यं (ष० त०) अपि नास्ति ॥८२॥

**नगराणि च राष्ट्राणि धनधान्ययुतानि च ।**
**नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥८३॥**

१ राष्ट्र-अस्त्री राष्ट्रं तु राज्ये स्यान्मरणादावुपद्रवे । ना०
२ धन द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । वै०
३ धान्य-धान्यं व्रीहिः,स्तम्बकरिः,स्तम्बो गुच्छस्तृणादिनः वै

४युु-यौति मिश्रेऽमिश्रणेऽपि संविभ्यां त्वनयोः क्रमात्।ना.क्रि०
५ युग-यानाद्यङ्गे युगः पुंसि, युगं युग्मे कृतादिषु। ना०

नगर ६४-१, च २-७, नित्य २४-१, प्रमु-दित ६-५, सर्व ३-३, यथा २५-६, कृत विशेषनाम, तथा २५-६।

नगराणि, राष्ट्राणि, सर्वे, भविष्यन्ति अक० प्र० नगराणि पुराणि राष्ट्राणि राज्यानि च धनधान्ययुतानि धनं द्रव्यं च धान्यं व्रीह्यादि च -न्ये (इ० द्व०) -भ्यां युतानि युक्तानि-नि (तृ० त०) सर्वे सम्पूर्णाः जनाः च यथा येन प्रकारेण कृतयुगे तथा कृतयुगवदि-त्यर्थः। नित्यं सदा प्रमुदिताः आनन्दिताः भवि-ष्यन्ति ॥ ८३ ॥

**अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः।**
**गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकम् ॥**
**असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः।**
**राजवंशाञ्शतगुणान्स्थापयिष्यति राघवः॥८४॥**

१ यज्-दाने यागे पूजने च संगतौ यजेति द्वयोः। ना०क्रि०

(१) यु मिश्रणामिश्रणयोः अ० प०
(२) यज देवपूजासंगतिकरणदानेषु भ्वा० उ०

२ गो-गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः ।
स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥
द्वयोस्तु स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥ ना०

३ कोटि-स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोः । ना०
४ विधि-विधिर्विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे । ना०
५ ख्या अदादौ ख्याति कथने प्रत्याख्याति निराकृतौ ।
आशयस्य प्रकाशे स्याद् व्याख्याति स्थापने त्वयम् ॥
नाम्नोऽभिख्याति शोभायां प्रसिध्द्यर्थे त्वकर्मकः ।
विख्यात्ययं च प्रख्याति, संख्याति गणने तथा ॥
प्रयोक्तव्यश्च सर्वोऽयं सार्वधातुकमात्रके ॥ ना० क्रि०

६ ब्राह्मण ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ।
आश्रमोऽस्त्री द्विजा[२]त्यग्रजन्मभूदेववाडवाः ॥
विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्वृतः ।

अश्वमेध विशेषनाम, शत १९-३, तथा २५-६, बहु ७-१, सुवर्ण ५९-३, अयुत १९-३, दा २०-६, विद्वस् ३-५, पूर्व २०-५, नञ् ४-५, धन ८३-२, महत् ५-७, यशस् १२-३, राजन् २१-१, वंश

(१) ख्या प्रकथने अ० प०
(२) द्विजाति अग्रजन्मन् पु०

८-१, गुण २-६, स्था १४-६, राघव नाम।
राघवः राजवंशान् स्थापयिष्यति सक० प्र०।

महायशाः महत् जगद्व्यापकं यशः कीर्तिर्यस्य सः -शाः ( ष०ब० ) राघवः श्रीरामचन्द्रः बहुसुवर्णकैः बहूनि सुवर्णानि दक्षिणारूपकनकनाणकानि येषु तानि -कानि (स० ब०)तैः-कैः अश्वमेधशतैः अश्वमेधानाम् अश्वमेधक्रतूनां शतानि—तानि ( ष० त० ) तैः-शतैः इष्ट्वा शतशोऽश्वमेधान्कृत्वेत्यर्थः। विद्वद्भ्यः ऋत्विग्भ्यः गवां कोट्ययुतं कोटिशो गाः विधिपूर्वकं विधिः मन्त्रः पूर्वं प्राग् यस्मिन् कर्मणि यथा स्यात्तथा—कं (स०ब०) दत्त्वा वितीर्य तथा ब्राह्मणेभ्यः विप्रेभ्यः असंख्येयं संख्यातुं गणितुं योग्यं संख्येयं ( कृ० वृ० ) न संख्येयं -यम् (न० त०)। अगणितं धनं द्रव्यं दत्त्वा वितीर्य शतगुणान् शतं शतसंख्याकः गुणः आवृत्तिर्येषान्ते-णाः (ष० ब०) तान्-णान् राजवंशान् राज्ञः क्षत्रियस्य वंशाः कुलानि-शाः ( ष० त० ) तान्-शान् स्थापयिष्यति राज्यप्रदानेन पालयिष्यति ॥ ८४ ॥

चातुर्वर्ण्यं च लोकेऽस्मिन्स्वेस्वे धर्मे नियोक्ष्यति
दशवर्षसहस्राणि दशवर्षशतानि च ॥

---

( १ ) क्रियाविशेषणमव्ययम्

रामोराज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ८९

१ वर्ष–स्याद्वृष्टौ लोकधात्रंशे वत्सरे वर्षमस्त्रियाम् । ना०
२ आस्[1]–उपवेशे स्थितावास्ते, उपास्ते सेवने स्मृतः ।
मध्यस्थत्वे उदास्ते ऽथारोपे ऽध्यास्ते, पराजये ।
परास्ते, ऽकर्मकः प्रोक्त उक्ते ऽर्थे सेवनादृते । ना० क्रि०
३ ब्रह्मन्[2]–वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः ।
ऋत्विग्योगाभिदोर्विष्णौ कथितस्तु मनीषिभिः ॥ ना०

चतुर् संख्या०, वर्ण ११–६, च २–७, लोक २-५, इदं २–३, स्व १४–१, धर्म २–९, युज् ३—२, दशन् सहस्र शत १०–३, राम ८–३, राजन् २१–१, या ६७—७ ।

रामः चातुर्वर्ण्यं नियोक्ष्यति सक० प्र०, रामः ब्रह्मलोकं प्रयास्यति सक० प्र० ।

· रामः श्रीरामचन्द्रः अस्मिन्लोके भूलोके चातुर्वर्ण्यं चत्वारश्च ते वर्णाः ब्राह्मणक्षत्रियविट्शूद्राश्च चतुर्वर्णाः ( वि० पू० क० ) चतुर्वर्णा एव चातुर्वर्ण्यं (त० वृ०) स्वेस्वे स्वस्ववर्णाश्रमानुकूले धर्मे सदाचारे नियोक्ष्यति

---

( १ ) आस उपवेशने अ० आ० ( २ ) ब्रह्मन् न०, पु०
( ३ ) स्वार्थे ष्यञ् ।

प्रवर्तयिष्यति । रामः दशवर्षसहस्राणि वर्षाणां संवत्सराणां सहस्राणि —णि ( ष० त० ) दश दशसंख्याकानि च तानि वर्षसहस्राणि च –णि (वि० पू० क०) दशवर्षशतानि वर्षाणां संवत्सराणां शतानि —नि (ष० त०) दश च तानि वर्षशतानि च—नि ( वि० पू० क० ) च राज्यं राज्ञः नृपस्य कर्म प्रजापालनादि राज्यं (त० वृ०) उपासित्वा अनुष्ठाय ब्रह्मलोकं ब्रह्मणः विष्णोः लोकः—कः ( ष० त० )तं–कं वैकुण्ठं प्रयास्यति गमिष्यति ॥ ८५ ॥

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ॥
यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥८६॥

१ पवित्र–पूतं पवित्रं मेध्यं च वीध्रं तु विमलार्थकम् । वि०
२ पाप–अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ।
कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम् ॥ का०
३ पुण्य–स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः । का०
४ पठ्–पठत्यधीतेऽध्ययने वाचने तु पठत्ययम् । ना०क्रि०

---

( १ ) "कालाध्वनोरत्यन्तसंयोगे" (अष्टा० सू० २-३-५) इति अत्यन्तसंयोगे द्वितीया ।

( २ ) पाप्मन् पु०  ( ३ ) वृजिन, एनस्, अघ, अंहस् न०

( ४ ) श्रेयस् न०  ( ५ ) पठ व्यक्तायां वाचि भ्वा० प०, इङ् अध्ययने अ० आ० नित्यमधिपूर्वः ।

इदं २-३, हन् ३९-४, वेद १४-३, च २-७, मा २४-६, यद् ७-४, राम ८-३, चरित ३-१, सर्व ३-३, प्र ३४-५, मुच् ६७-२।

यः रामचरितं पठेत् सक० प्र०, सर्वपापैः सः मुच्यते कर्म० प्र०।

यः पुरुषः इदं पवित्रं शुद्धिसाधनं पापघ्नं पापं किल्बिषं हन्ति नाशयति तत्-घ्नं (उप० स०) वेदैः ऋगादिभिः सम्मितं तुल्यं पुण्यं सुकृतजनकं रामचरितं रामस्य श्रीरामचन्द्रस्य चरितं वृत्तान्तः-तं तत्-तं पठेत् वाचयेत्, सः सर्वपापैः सर्वाणि सम्पूर्णानि च तानि पापानि किल्बिषाणि च -नि (वि० पू० क०) तैः-पैः प्रमुच्यते मुक्तो भवति ॥ ८६ ॥

**एतदाख्यानमायुष्यं पठन् रामायणं नरः ॥**
**सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥८७॥**

१ आयुष्-आयुर्जीवितकालो ना जीवातुर्जीवनौषधम्। क्ष०
२ मही-ऋतीयते धिग्घृणयोः, पूजावृध्योर्महीयते। ना०क्रि०

---

(१) "ऋतेरीयङ्" (अष्टा० सू० ३-१-२९) इति सूत्रस्य ईयङन्त ऋतधातुः अ० आ०

(२) महीङ् पूजायाम् कण्ड्वादि० आ०

एतद् २–३, ख्या ६–६, पठ् ८६–४, राम ८–३, अय् १७–१, नर १–८, सह ३७–२, पुत्र २८–१, गण ७४–३, प्रेत्य ८२–१, स्वर्ग २८–४ ।

नरः महीयते अक० प्र०

आयुष्यम् आयुषे जीवनाय हितम् आयुष्यं (त० पु०) एतद् एतावन्मात्रोक्तं रामायणं रामः श्रीरामचन्द्रः अयनं प्रतिपाद्यो यस्य तत्—णम् आख्यानम् इतिहासं पठन् नरः मनुष्यः सपुत्रपौत्रः पुत्राः सुताश्च पौत्राः नप्तारश्च पुत्रपौत्राः ( इ० द्वं० )—त्रैः सहितः युक्तः—त्रः (तृ० त०) सगणः गणैः भृत्यबान्धवादिभिः सहितः युक्तः—णः ( तृ० त० ) प्रेत्य परलोके स्वर्गे सुरलोके महीयते पूज्यते ॥ ८७ ॥

पठन् द्विजो वागृषभत्वमीयात्
स्यात्क्षत्रियो भूमिपतित्वमीयात् ॥
वणिग्जनः पण्यफलत्वमीया—
ज्जनश्च शूद्रोऽपि महत्त्वमीयात् ॥ ८८ ॥

१क्षत्रिय-मूर्धाभिषिक्तो राजन्यो, बाहुजः क्षत्रियो विराट् क्ष०
२वणिज्—वैदेहकः सार्थवाहो नैगमो वणिजो वणिक् । वै०
३पण्य—विक्रेयं पणितव्यं च पण्यं क्रय्यादिवस्तुषु । वै०
४फल—फलं हेतुकृते जातीफले फलकसस्ययोः । ना०

( १ ) विराज् पु०    ( २ ) वणिज् पु०

५शूद्र–शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः। शू०

पठ ८६–४, द्विज २९–२, वाच् १–५, ऋषभ १–१३, इण् १७–१, अस् ५–९, भूमि १८–७, पति १३–३, जन ८–५, च–२–७, अपि २५–६, महत् ५–७।

द्विजः वागृषभत्वम् ईयात्, क्षत्रियः भूमिपतित्वम् ईयात्, वणिग्जनः पण्यफलत्वम् ईयात्, शूद्रः महत्त्वम् ईयात् सक० प्र०।

द्विजः ब्राह्मणः पठन् संक्षिप्तरामायणमधीयन् सन् वागृषभत्वं वाचि वचने श्रेष्ठः वागृषभः ( स० त० ) –स्य भावः–त्वं (त० वृ०) वक्तृत्वम् ईयात् प्राप्नुयात्। क्षत्रियः स्यात् चेत् भूमिपतित्वं भूमेः पृथिव्याः पतिः स्वामी भूमिपतिः ( प० त० )–तेः भावः-त्वं (त० वृ०) नृपत्वम् ईयात्। वणिग्जनः वणिक् वैश्यश्चासौ जनः लोकश्च–नः ( वि०पू०क० ) पण्यफलत्वं पण्यैः क्रय्यपदार्थैः फलं लाभः यस्य सः–लः ( ष० ब० )–स्य भावः–त्वं ( त०वृ० ) ईयात्। जनः पामरः शूद्रः शूद्रवर्णः अपि महत्त्वं जन्मान्तरे श्रेष्ठजातिम् ईयात् ॥८८॥

॥ इति रामायणप्रकाशः समाप्तः ॥

---

( १ ) संभावनेऽर्थे लिङ्, यथार्थः फलितः।

